॥ ६८ ॥ ६९ ॥ ननुमहिषवधोमार्कंडेयपुराणेऽन्यथोक्तोदेवीभागवतेचाऽन्यथोक्तस्तत्रा।ऽिक्तम् ॥ पुराकल्पेयथावृत्तंप्रतिकल्पंतथैवच ॥ प्रवर्ततेस्वयंदेवीदैत्यानांनाशनायवै ॥ तथैवजायतेयुद्धं तथैवत्रिंशागमइतिरामवृत्तांतवर्णनेकालिकापुराणादितिचेन्न ॥ तत्रवचनेप्रायशइत्यध्याहारेणदोषाऽभावत् ॥ अतएवहरिवंशादिषूत्पत्तिक्रमभेदोऽपिनदोषायकइति ॥ ७० ॥ ॥ इतिश्रीदेवीभागवततिलकेपंचमस्कंधेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ ५ ॥ ॥ अर्थाऽधिकैस्त्रिव त .रंशत्सुपद्यैरनंतरम् ॥ देवैःकृतामहादेव्याःस्तुतिरित्येतदुच्यते ॥ १ ॥ स्तोतुकामादेवाआगत्यकिंचक्रुस्त दुच्यते अथेति ॥ १ ॥ तत्रप्रथमतः सृष्टिस्थितिसंहारकर्तृत्वेनसर्वेश्वरत्वंभगवत्याः सहेतुकंवर्णयंति ब्रह्मेति ॥ हेभगवतियस्माद्ब्रह्मातवैवशक्त्यायुक्तोजगत्सृजति ॥ तथाविष्णुरिदंजगदवतिपालयति ॥ तथांतकालेप्रलयकालेतवैवशक्त्यायुक्तोमहेशःशिवोजगत्संहरते ॥ यस्माचतयाशक्त्याविहीनास्तेब्रह्मादयोजगतःसृष्टिस्थितिनाशेषुनेशानसमर्थास्तस्मादन्वयव्यतिरेकाभ्यांत्वमेवजगतःस्थितिनाशकर्त्री ॥ इदंसृष्टिकर्तृत्वस्याप्युपलक्षणम् ॥ त्वमेवसर्वेश्वरीतिभावः ॥ तथाचश्रुतिः ॥ काऽसित्वंमहादेवि ॥ साब्रवीदहंब्रह्मरूपिणी मत्तःप्रकृतिपुरुषात्मकंजगत् ॥ मायावाएषानारसिंहीसर्वमिदंसृजति सर्वमिदंरक्षति सर्वमिदंसंहरतीत्यादिः ॥ सूतसंहितायांच ॥ यस्तुब्रह्मत्वमापन्नःशिवोयोमुनिसत्तमाः ॥ सातस्याऽपिभवेच्छक्तिस्तयाहीनोनिरर्थकः ॥ यस्तुविष्णुत्वमापन्नःशिवोयोमुनिसत्तमाः ॥ सातस्याऽपिभवेच्छक्तिस्तयाहीनोनिरर्थकः ॥ यस्तुरुद्रत्वमापन्नःशिवोयोमुनिसत्तमाः ॥ सातस्याऽपिभवेच्छक्तिस्तयाहीनोनिरर्थकइति ॥ २ ॥ यस्मात्त्वं [illegible] पाऽपिजातैव ॥ कार्यस्यकारणानन्यत्वादितिवदन्मुख्यानिरूपाणिविभूतिस्थानापन्नान्युपासनार्थमनुवदति कीर्तिरिति ॥ स्मृतिगतीइतिद्वंद्वः ॥ अजपाजपामंत्ररूपे [illegible] पाई [illegible] श्वरशक्तिः ॥ ३ ॥ किंपुनरेतावत्स्वरूपैवाहमस्मीतिचेत्तत्राह सर्वत्वमेवविदितेति ॥ सर्वकारणरूपायास्तवकार्यमात्रस्वरूपत्वात्सर्वात्मकत्वमस्त्येवेत्यर्थः ॥ ननुतदे [illegible] सेव [illegible] मितिप्रतिपादितमितिचेदाभिर्विनाव्यवहारस्याऽसंभवादासांमुख्यत्वेनोपासकानांविभूतिस्वरूपप्रदर्शनार्थंप्रतिपादितमित्यभिप्रायेणाह आभिर्विनेति ॥ कर्तुंव्यवहारमित्यर्थः [illegible] मेइतिदेवीसंबोधनम् ॥ सर्वाऽधिष्ठानरूपिणीत्यर्थः ॥ अधुनाधारणाशक्तिरूपांविभूतिंवर्णयति त्वंधारणाननुनचेदिति ॥ हेभगवतित्वंधारणाशक्तिरूपाननुनिश्चयेननचेदसि [illegible] वासभूर्वींधर्तुंकथंक्षमौभवेतांनकथमपीत्यर्थः ॥ तथात्वंपृथ्वीनचेदसितदैतज्जगद्बहुभारयुक्तंगगनेंतरिक्षेकथंस्थास्यति ॥ नकथमपीत्यर्थः ॥ तथाचसर्वाधारशक्तिरूपात्वमसि [illegible] कूर्मनागाविलांपृ [illegible] भावः ॥ तथाचश्रुतिः ॥ अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैः ॥ अहंमित्रावरुणोभाविभर्मीत्यादिः ॥ ५ ॥

मृतेचमहिषेक्रूरेदानवाभयपीडिताः ॥ मृतशेषाश्चयेकेचित्पातालंतेययुर्नृप ॥ ६८ ॥ आनंदंपरमंजग्मुर्देवास्तस्मिन्निपातिते ॥ मुनयोमानवाश्चैवयेचान्येसाधवःक्षितौ ॥ ६९ ॥ चंडिकाऽपिरणंत्यक्त्वाशुभेदेशेऽथसंस्थिता ॥ देवास्तत्राऽऽययुःशीघ्रंस्तोतुकामाःसुखप्रदाम् ॥ ७० ॥ ॥ इतिश्रीदेवीभागवतेमहापुराणेपंचमस्कंधेमहिषाऽसुरवधोनामाऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ ५ ॥ ॥ व्यासउवाच ॥ अथप्रमुदिताःसर्वेदेवाइंद्रपुरोगमाः ॥ महिषंनिहतं [illegible] र्जगदंबिकाम् ॥ १ ॥ देवाऊचुः ॥ ब्रह्मासृजत्यवतिविष्णुरिदंमहेशःशक्त्यातवैवहरतेननुचांतकाले ॥ ईशानतेऽपिचभवंतितयाविहीनास्त [illegible] ॥ नमोदेवि [illegible] तिनाशकर्त्री ॥ २ ॥ कीर्तिर्मतिःस्मृतिगतीकरुणादयात्वंश्रद्धाधृतिश्चवसुधाकमलाजयाच ॥ पुष्टिःकलाऽथविजयागिरिजाजया [illegible] क्तथाकोऽपिवेदा [illegible] रमाच ॥ ३ ॥ विद्याक्षमाजगतिकांतिरपीहमेधासर्वंत्वमेवविदिताभुवनत्रयेऽस्मिन् ॥ आभिर्विनातवतुशक्तिभिराशुकर्तुंकोवाद [illegible] तुष्टीधृतिःकांतिशांति [illegible] ॥ ४ ॥ त्वंधारणाननुनचेदसिकूर्मनागौधर्तुंक्षमौकथमिलामपितौभवेताम् ॥ पृथ्वीनचेत्त्वमसिवागगनेकथंस्थास्यत्येतदंबनिखि [illegible] ऽद्यशांत्यै ॥ क्षमायां [illegible] तेसदासर्वदेवेषुदेविप्रसिद्धा [illegible]

॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

इत्थंसर्वैश्वर्यात्वयिसत्यांयेऽन्येऽन्यदेवताउपासते तेनवमायागुणैर्विमूढाएवेत्याह येवास्तुवंतीति ॥ वाशब्दस्त्वर्थकः ॥ येतुमनुजाअमरांश्चतुर्मुखविष्णुरुद्र[illegible]भ्यांप्राहरत् ॥ ४६ ॥ ४७ ॥
तेतत्रमायागुणैर्विमूढाएवमोहिताएव ॥ नस्वोपास्यदेवतांकल्याणदायिनींमुख्यत्वेनाराध्यांजानंतीतिभावः ॥ किंत्वांशक्तिरूपामृतेविहायकार्यैकार्यविषयेतेदेवाः[illegible]धानाऽऽशुसे।
तोमूढैराराध्यंते किंतुनैवभवंति त्वच्छक्तियुक्ताएवतेभक्तकार्यंकर्तुंक्षमास्ततस्त्वामेवकुतोनभजंतीतिभावः ॥ तदुक्तंशिवपुराणेउमासंहितायाम् ॥ येनस्तुवंतिदेवेशींसर्वे[illegible]
मायागुणैर्मोहिताःस्युर्हतभाग्यानसंशयइति ॥ ६ ॥ एवमन्यदेवतोपासकोपहासंकृत्वा श्रोत्रियोपहासमाह येजुह्वतिप्रवितत इति ॥ हेभगवति अथानंतरंयेप्रवितते विस्तृते[illegible]ऽऽधा
मधिकृत्योद्दिश्यसमृद्धंविपुलंहविर्जुह्वतितेऽपिअल्पधियएव ॥ यतस्तस्मिन्यज्ञेत्वंस्वाहारूपानचेदसिनप्रयुज्यसेचेत्तदातेदेवाअद्धासाक्षात्तद्धुतंहविरापुःप्राप्नुयुःकिं नै[illegible]तनायथा ॥ नग्राम्यसु[illegible]ये
षांजीवितमिति ॥ ततस्तस्माद्धेतोस्त्वामेवमूढाःकिंनयजंतिकुतोनयजंतीत्यर्थः ॥ यतोनयजंतिततोऽल्पधियएवतेइतिभावः ॥ तथाचब्रह्मांडपुराणेललितोपाख्या[illegible]
ऽप्ययज्वनः ॥ स्वयंतोनापेक्षंतेइंद्रमग्निंचयेविदुः ॥ सिकताइवसंयंतिरश्मिभिःसमुदीरिताः ॥ अस्माल्लोकादमुष्माच्चेत्याहच।रण्यकश्रुतिरिति ॥ काठकेपि[illegible] ॥ ३९ ॥ लोहबद्धोऽ[illegible]

येवास्तुवंतिमनुजाअमरान्विमूढामायागुणैस्तवचतुर्मुखविष्णुरुद्रान् ॥ शुभ्रांशुवन्हियमवायुगणेशमुख्यान्किंत्व[illegible] ॥
॥ ६ ॥ येजुह्वतिप्रविततेऽल्पधियोंबयज्ञेवन्हौसुरान्समधिकृत्यहविःसमृद्धम् ॥ स्वाहानचेत्त्वमसितेकथमापुरद्धात्वामेवा[illegible]
॥ ७ ॥ भोगप्रदाऽसिभवतीहचराचराणांस्वांशैर्ददासिखलुजीवनमेवनित्यम् ॥ स्वीयान्सुरान्जननिपोषयसीहयद्वत्तद्वत्प[illegible] ॥ [illegible]ति
हेतोः ॥ ८ ॥ मातःस्वयंविरचितान्विपिनेविनोदाद्वंध्यान्पलाशरहितांश्चकटूंश्चवृक्षान् ॥ नोच्छेदयंतिपुरुषानिपुणाःकथंचित्तस्मा[illegible]त्यांततरांप
रिपासिदैत्यान् ॥ ९ ॥

रंयेषुकर्मेति ॥ ७ ॥ ननुतेषांदेवानांभोगप्रदत्वाल्लोकास्तानेवभजंतीतिचेत्तत्राह भोगप्रदासीति ॥ हेभगवतिभवतित्वमेवचराचराणांभोगप्रदासि ॥ यतःस्वांशैःसप्तप्रकृतिविकृतिरूपैः ॥ षोडशवि
कारैश्चनित्यंप्राणिनांजीवनंप्राणनंददासिप्रारब्धकर्मभोगार्थम् ॥ नहितद्विरहितानांजीवहीनानांप्रारब्धभोगःसंभवति ॥ तस्मात्प्रारब्धकर्मभोगानुसारेणजीवनदातृत्वात्त्वमेवभोगप्रदासीत्यर्थः ॥
तत्रहेतुमप्याह स्वीयानिति ॥ यथास्वीयान्सुरान्पोषयसि ॥ इहप्रपंचेतद्वत्[illegible]न्सुरानपिभोगजीवितदानेनाऽपिपालयसीतिहेतोस्त्वमेवभोगप्रदासीत्यर्थः ॥ नहिपूर्वोक्तदेवानांभोगप्रदत्वे
तेदेवाःस्वशत्रुभ्योदैत्येभ्योऽपिभोगंददतीतियुज्यते ॥ दैत्यभोगप्रणाशार्थंभवतेषांयु[illegible]गात्तस्मात्तद्देवेभ्योव्यतिरिक्तात्वमेवभोगप्रदासीतिभावः ॥ ८ ॥ ननुदुष्टान्दैत्यान्किमित्यहंपालयामीतिचे
त्तत्राह मातःस्वयमिति ॥ हेभगवतिमातर्यस्मात्कारणाद्विपिनेऽरण्येविनोदाल्लीलयावंध्यान्निष्फलान्पलाशरहितान्पत्ररहितान् कटूंश्चवृक्षान्स्वयंविरचितानुत्पादितान्निपुणाःपंडिताःपुरुषानोच्छेदयं
तिकथंचित्कथमपि ॥ तस्मात्त्वमपितद्वदेवतेषांनिकृष्टकर्मभिस्तानुत्पाद्यदैत्यान्नोच्छेदयसि किंतुपालयस्येवेत्यर्थः ॥ तदुक्तंविषवृक्षोपिसंवर्ध्यस्वयंछेत्तुमसांप्रतमिति ॥ ९ ॥ ॥ ५ ॥

नन्वेवंचेत्तेषामुच्छेदोऽनुचितएवेतिकथंमयातेनिरंतरंहन्यंतेइतिचेत्तत्राह यत्त्वंतुहंसीति [illegible] हेभगवति ॥ त्वंकरुणारसमाददानैवदेहांतरंपिस्वर्गादिष्वपिदेवांगनानांसुरतरूपासुकेलिषुक्रीडासुमति
येषामरातीनांशत्रूणांतानरातीन्शरैरणमूर्ध्निहंसि यत्तत्तेचरित्रमिदमनुचितंन ॥ किं [illegible]प्सितपूरणायतेषांमनोरथपूरणायैव नद्वेषार्थमित्यर्थः॥अयंभावः ॥यद्यहंदेवानांभोगेच्छून्दैत्यान्नहनिष्यामि
तदातेषांकथंतद्भोगसिद्धिः ॥ नहितेतामसप्रकृतयोयागादिभिःस्वर्गंगमिष्यंति [illegible] नचतद्विनातत्सुखंप्राप्स्यंति तस्मादेतानमच्छस्त्रपूतान्कृत्वास्वर्गंप्रापयिष्यामीतिमनीषयातेषांकल्याणार्थमेवव
धोनान्यप्रयोजनइति ॥ तदुक्तम् ॥ लालनेताडनेमातुर्नाऽकारुण्यंयथाऽर्भके [illegible] तद्वदेवमहेशस्यनियंतुर्गुणदोषयोरिति ॥ १० ॥ ननुस्वर्गसुखार्थमेवयदितानहंहन्मितर्हितावन्मात्रंकार्यंममेच्छयाऽ
पिभवितुमर्हति ममेच्छयैवसर्वसृष्टेर्जातत्वात्तथाचकिमर्थंदैत्यवधफल्गुकार्यार्थमवतारग्रहणमितिचेत्तत्राह चित्रंत्वमीति ॥ हेजननियेषांकृतेयेषांदैत्यानामर्थेतेतवदेहनिबंधनंदेहग्रहणंभवति ॥ तेदनु
जादैत्यास्त्वाम्चिंतितेनत्वदिच्छयाअसुभिःप्राणैरहितानसंतीतियत्तच्चित्रमेवाऽऽश्चर्यमेवत्वदिच्छयैवतेषांमरणंस्वर्गप्राप्तिश्चाऽनायासेनैवापेक्षिता ॥ नतुतदर्थमवताराऽपेक्षाऽस्ति ॥ तदेतत्कुतोन
जातमित्याश्चर्यमेवाऽस्माकंभाति ॥ तर्हिममाऽवतारग्रहणेकोहेतुर्भवद्भिर्योजितइतिचेत्क्रीडारसएवाऽत्रहेतुर्नान्यतरः ॥ स्वार्थेतरप् ॥ नान्यइत्यर्थः ॥ अवतारंगृहीत्वानानालीलाः कर्तव्यास्तल्ली

यत्त्वंतुहंसिरणमूर्ध्निशरैररातीन्देवांगनासुरतकेलिमतीन्विदित्वा ॥ देहांतरेऽपिकरुणारसमाददानातत्तेचरित्रमिदमीप्सितपूरणाय ॥१०॥ चित्रंत्वमीयद
सुभीरहितानसंतित्वच्चिंतितेनदनुजाःप्रथितप्रभावाः ॥ येषांकृतेजननिदेहनिबंधनंतेक्रीडारसस्तवनचाऽन्यतरोऽत्रहेतुः ॥ ११ ॥ प्राप्तेकलावहहदुष्टतरे
चकालेनत्वांभजंतिमनुजाननुवंचितास्ते ॥ धूर्तैःपुराणचतुरैर्हरिशंकराणांसेवापराश्चविहितास्तवनिर्मितानाम् ॥ १२ ॥ ज्ञात्वास[illegible]सुरार्दितां
श्चयेवैभजंतिभुविभावयुताविभग्नान् ॥ धृत्वाकरेसुविमलंखलुदीपकंतेकूपेपतंतिमनुजाविजलेऽतिघोरे ॥ १३ ॥ विद्यात्वमे[illegible] ॥ नमोदेवि[illegible]विद्या
मातस्त्वमेवजननार्तिहरानराणाम् ॥ मोक्षार्थिभिस्तुकलिताकिलमंदधीभिर्नाऽऽराधिताजननिभोगपरैस्तथाऽज्ञैः ॥ १[illegible] [illegible]दृक्कथाकोऽपिवेदादि[illegible]मेशंश
रण्यंपादांबुजंतवभजंतिसुरास्तथान्ये ॥ तद्वैनयेऽल्पमतयोमनसाभजंतिभ्रांताःपतंतिसततंभवसागरेते ॥ १५ ॥ [illegible]तुष्टीधृतिःकांतिशांती[illegible] [illegible]ऽघशांत्यै ॥ क्षमायै[illegible]

लाकीर्तनेनश्रवणेनच भक्तिवृद्धिःपवित्रता चभविष्यतीतिक्रीडारसएवाऽत्रहेतुरितिभावः ॥ तदुक्तंशिवपुराणेउमासंहितायाम् ॥ यदिच्छावैभवंसा[illegible] तेसदासर्वदेवेषुदेविप्रसिद्धा[illegible] [illegible]सांऽपिभ
क्तानांगुणवर्णनहेतवे ॥ साऽपिलीलाऽपीत्यर्थः ॥ देहग्रहोऽवतारः ॥ ११ ॥ एवमेतादृशवैभवांत्वांजनानभजंतियतोधूर्तैस्तेवंचिताइतिजनानाक्रोशति [illegible]तिसाध
नांतररहितस्याऽतिपापिनोऽपि स्मरणमात्रेणचतुर्विधपुरुषार्थदांत्वांभगवतींयेनभजतिते धूर्तैः पुराणचतुरैर्ननुनिश्चियेनवंचिताः ॥ वंचयित्वाचतवनिर्मितानां[illegible]सेव
पराश्चविहिता इत्यहहाहोलोकस्यभाग्यमित्थमस्तीतिभावः ॥ १२ ॥ पुनरपिजनानाक्रोशति ज्ञात्वेति ॥ तववशांस्त्वदधीनानसुरार्दितान्दैत्यपीडितान्विभग्नान्[illegible]र्थः ॥ [illegible]
वाञ्ज्ञात्वाऽपियेभजंतीत्यन्वयः ॥ दीपकंदीपमित्यर्थः ॥ अन्योऽर्थःस्पष्टः ॥ तदुक्तमुमासंहितायाम् ॥ नभजंतिमहादेवींकरुणारससागराम् ॥ अंधकूपेपतंत्यतेघोरेसंसाररूपपर्णी[illegible]नवासभू
नुतर्हिकैरहमाराधिताऽस्मीतिचेत्तत्राहुः विद्यात्वमेवेति ॥ असुखदाअविद्याऽपिहेमातस्त्वमेव नराणांजनाऽऽर्तिहराऽपित्वमवे॥सर्वस्वरूपात्वमेवाऽसीत्यर्थः ॥ सैतादृशी[illegible]कूर्मेनागाविलांपृ
लिताऽसिआराधितासि ॥ अज्ञैर्नाऽऽराधितासीत्यार्थिकार्थकथनम् ॥ १४ ॥ तर्हियेमांनभजंतितेषांकागतिर्भवतीतिचेत्तत्राह ब्रह्माहरश्चेति ॥ १५ ॥ ॥[illegible]नावः ॥ तथाचश्रुतिः ॥

पुनर्जनानाक्रोशति चंडीति ॥ चंडिकोपइतिधातोश्चंडीतिरूपंनिष्पन्नं ॥ सकलजगद्भयंकरंब्रह्ममायाविशिष्टंचंडीपदवाच्यं॥ब्रह्मणोभयंकरत्वंच भीषास्मा... श्रुतौ ॥ महद्भयंवज्रमुद्यतमिति श्रुतौकंपनादित्यधिकरणेचवर्णितम् ॥ त्वदंघ्रिजलजंतवांघ्रिकमलंतस्मादुत्थितंरजःपंचमहाभूतरूपंअन्यःस्पष्टोर्थः॥१६॥इयंयायथाकथंचिदस्माभिःस्तुतिः... यतीवेतिनवयंविद्योयतो वाग्देवतयात्वयायथासुखेस्थितयाप्रेर्यंतेतथाकुर्मइत्याह वाग्देवतेति ॥ हेदेविसुराऽसुराणांवाग्देवतात्वमसि ॥ कुतइतिचेद्यस्मात्तेषांमुखेयदैवयदाऽपित्वंचेन्नैववसि... दातेमरवराउप लक्षणतयादैत्याअपिवक्तुंशक्तानैवप्रभवंतितस्मादित्यर्थः ॥ क्वेयंव्याप्रिर्गृहीतेतिचेद्यस्मान्मनुजास्तद्विहीनावाग्देवताविहीनामूकामुखेसत्यपिनैवब्रुवंतिवदंति तस्मात्त्व... ॥१७॥ अधुनादेवतासुप्रत्येकंदोषंदर्शयंस्तद्भक्तानुपहसति ॥ शप्तोहरिरिति ॥ हेजननिकुपितेनभृगुणाहरिःशप्तस्तुशप्तएवकामंयथेच्छंमीनोबभूव॥तथाकमठःकूर्मः ॥ त... इतिभा हइतिएवंप्रकारेण यश्छलकृद्धामनोपिबभूवेतिपराधीनायेऽवतारास्तान्सेवतांपुरुषाणांमृतिभयंकिंनस्यादपितुस्यादेव येशापदग्धाःस्वस्यकल्याणंकर्तुंनश... यमपीत्य वः॥१८॥शंभोःपपातेति॥यस्यशंभोःसतीवियोगादरण्यगतस्यभृगोःशापाल्लिंगंपतितमिदंपुराणादिषुप्रसिद्धम्॥ स्वलिंगपालनेपियोनसमर्थस्तंशिवंयेभजं...

चंडित्वदंघ्रिजलजोत्थरजःप्रसादैर्ब्रह्माकरोतिसकलंभुवनंभवादौ ॥ शौरिश्चपातिखलुसंहरतेहरस्तुत्वांसेवतेनमनुजस्त्वि...सि ॥ नारीसंगेमहे... वाग्देवता त्वमसिदेविसुराऽसुराणांवक्तुंनतेऽमरवराःप्रभवंतिशक्ताः ॥ त्वंचेन्मुखेवससिनैवयदैवतेषांयस्माद्भवंतिमनुजानहितद्विहीनाः ॥ ...तुभृगु णाकुपितेनकामंमीनोबभूवकमठःखलुसूकरस्तु ॥ पश्चान्नृसिंहइतियश्छलकृद्धरायांतान्सेवतांजननिमृत्युभयंनकिंस्यात् ॥ ...यदेव्यास्तु लिंग मिदंप्रसिद्धंशापेनतेनचभृगोर्विपिनेगतस्य ॥ तंयेनराभुविभजंतिकपालिनंतुतेषांसुखंकथमिहाऽपिपरत्रमातः ॥ १९ ॥ योभू... योगे पतिर्म हेशात्तंयेभजंतिमनुजावितथप्रपन्नाः ॥ जानंतितेनसकलार्थफलप्रदात्रींत्वांदेविविश्वजननींसुखसेवनीयाम् ॥ २० ॥ चित्रंत्वयाऽरिजन...पदयार्द्रभावा द्धत्वारणेशितशरैर्गमिताद्युलोकम् ॥ नोचेत्स्वकर्मनिचितेनिरयेनितांतंदुःखाऽतिदुःखगतिमापदमापतेत्सा ॥२१॥

र्थः॥१९॥ योभूद्गजाननेति॥ हेमातः॥ महेशाच्छि वादभूत्कोसौ गजाननश्चाऽसौगणाधिपतिश्चतंशिवपुत्रंयेभजंतितेनरावितथप्रपन्नाअकल्याणकरेदेवेकल्याणकरत्वदेवबुद्धिमापन्नाभ्रांताएव॥शिवाराधनेनतुकल्याणंनैवजायते ॥ कुतःपुनस्तत्पुत्राराधनेनेतिभावः॥किमर्थमेताहशंभवतीतिचेत्तत्राह जानंतितेनेति॥सुखसेवनीयांस्मरणमात्रेणापिचतुर्विधपुरुषार्थदांविश्वमातरंनजानंतीतिहेतोःनहिताहशज्ञानेसतिउत्कृष्टपक्षपातंविहायनिकृष्टपक्षपातं कश्चित्करोति॥तस्मात्तेमूढत्वात्तथाकुर्वंतीतिभावः॥तदुक्तंशिवपुराणेउमासंहितायाम्॥गंगांविहायतृष्यर्थंमरुवारियथाव्रजेत्॥विहायदेवींतद्भिन्नंतथादेवांतरंव्रजेदिति॥यस्याःस्मरणमात्रेणपुरुषार्थचतुष्टयम्॥ अनायासेनलभतेकस्त्यजेत्तांनरोत्तमइति सूतसंहितायामपि॥करुणासागरामेतांयःपूजयतिशांकरीम्॥ किंनसिध्यतितस्येष्टंतस्याएवप्रसादतइति॥२०॥श्रीदेवींसंतोषयितुंकांचिच्चमत्कारवार्तांकुर्वंति चित्रमिति ॥ हेदेवि ॥ चित्रमयमेकोविलक्षणश्चमत्कारइत्यर्थः ॥ ...साविवितिचेच्छृणु त्वयारिजनतापिशत्रुसमूहोपिदयार्द्रभावान्निशितशरैरणेहत्वाद्युलोकंस्वर्गलोकंगमितापापितेति ॥ नहिदयायांसत्यांदयाविषयस्यवधःसंभवति ॥ नचशत्रुविषयेकस्याऽपिदयोद्भवो... ॥ तस्मादिदमुभयमपिविद्यमानमाश्चर्यमेव ॥ननुकिमर्थंमयातेषांदयानासुपरिआश्चर्यैकारणभूतादयासंपादितेति चेत्तत्राह नोचेत्स्वकर्मेति ॥ स्वस्यासुरसमूहस्ययत्तामसंकर्मतेननिचितेसंपादितेनि...नरकेनितांतमत्यंतंयथास्यात्तथादुःखापेक्षयाप्यतिदुःखस्यगतिःप्राप्तिस्तद्रूपामापदंनोचेत्यदिदयानक्रियतेचे त्तदाऽऽपतेत्प्राप्नुयात्साऽरिजनतेतिहेतोरित्यर्थः ॥ असुरयोनिष्वपियदैताहशीदयातदे...क्तेषुकिमुवक्तव्यमितिविश्वइतिगूढोऽभिसंधिः ॥ निरतिशयदयावत्त्वमनेनवर्णितम् ॥ २१ ॥ ॥ ५ ॥

ननुवीराणांपराक्रमवर्णनएवसंतोषोभवतितततोभवद्भिर्ममपराक्रमः कुतोनवर्ण्यतेतत्राह ब्रह्मा हरश्चेति ॥ गर्वभावादहंकारावृतत्वात्तादृशाःपरिच्छिन्नाब्रह्मादयोऽपितवप्रभावंनजानंतियदातदातवाऽमि
तप्रभावैरतुलप्रभावैर्गुणैःसत्त्वादिभिःसंमोहिताः केऽन्येअस्मदादयःप्रभावंविदितुंसमर्था [illegible]वंति नकेपीत्यर्थः॥तथाचश्रुतिः॥यस्याःस्वरूपंब्रह्मादयोनविजानंतितस्मादुच्यतेऽज्ञेयेति॥२२॥ननुयथामत्प्र
भावस्तथामत्स्वरूपमपिकेनापिनज्ञायतेचेत्कथमुच्यतेभगवत्याराधनान्मुक्तोभवती[illegible]ज्ञानहिप्रभावस्वरूपज्ञानंविनाराधनंसंभवतीतिचेत्तत्राह क्लिश्यंतितेऽपीति ॥ हेमातः येमुनयस्तवरूपंदुर्विभाव्यमि
तिमत्वातवपादांबुजंनहिभजंति ॥ अथचदृश्यमानसूर्याग्निसेवनपराअग्निहोत्रादि[illegible]निष्णाताभवंतितेविमूढचित्ताः ॥ क्लिश्यंत्येवक्लेशंप्राप्नुवंत्येव ॥ यतःश्रुतिशतैःसर्ववेदैरपिप्रतिपादितमतएववेदसारं
परमार्थतत्त्वंतैर्नज्ञातंततइत्यर्थः॥ अयंभावः॥ नहिब्रह्मरूपिण्याभगवत्यारूपंके[illegible]चिदुपलभ्यतेस्पष्टतया॥ किंतु अस्तीत्येवोपलब्धव्यस्तत्त्वभावेनचोभयोः॥ अस्तीत्येवोपलब्धस्यतत्त्वभावःप्रसीदतीति
श्रुत्युक्तरीत्यातथानेतिनेतीतिप्रतिपादितरीत्याचनिषेधावधिभूताकाचिदस्तिभगवतीतिसत्तामात्रोपलब्ध्यैवतदाराधनस्यसंभवात् ॥ तत्रक्लेशंमन्वानायेतांसच्चिदानंदरूपिणींनभजंतितेक्लिश्यंतीतियु
क्तमेवेति ॥ तथाश्रुतिः ॥ योवाएतदक्षरमविदित्वागार्गिअस्मिंल्लोकेजुहोति ददातितपस्यत्यपिबहूनिवर्षसहस्राण्यंतवानेवाऽस्यलोकोभवतीति ॥२३ ॥ ननुतर्हिसर्वोत्कृष्टांसुलभांसर्वफलदांममोपासनां
किमितिमूढाःपरित्यजंतिव्यर्थमितिचेत्तत्राह मन्येइति ॥ हेमातस्तवगुणाःसत्त्वादयोहिस्वबुद्धिरचितैःपुरुषबुद्धिरचितैर्विविधाऽऽगमैर्नानातंत्रैर्मोहकैर्हेतुभिर्लोकान्विष्ण्वीशभास्करगणेशदेवतापरान्

**ब्रह्माहरश्चहरिरप्युतगर्वभावाज्जानंतितेऽपिविबुधानतवप्रभावम् ॥ केऽन्येभवंतिमनुजाविदितुंसमर्थाःसंमोहितास्तवगुणैरमितप्रभावैः ॥२२॥ क्लिश्यंतिते**
**ऽपिमुनयस्तवदुर्विभाव्यंपादांबुजंनहिभजंतिविमूढचित्ताः ॥ सूर्याग्निसेवनपराःपरमार्थतत्त्वंज्ञातंनतैःश्रुतिशतैरपिवेदसारम् ॥२३॥ म[illegible]णास्तवभुविप्र**
**थितप्रभावाःकुर्वंतियेहिविमुखान्ननुभक्तिभावात् ॥ लोकान्स्वबुद्धिरचितैर्विविधाऽऽगमश्चविष्ण्वीशभास्करगणेशपरान्विधाय ॥२[illegible] ॥ नमोदेविविं[illegible]प्रदाद्वि**
**मुखान्नराग्र्यान्स्वोक्तागमैर्हरिहरार्चनभक्तियोगैः ॥ तेषांनकुप्यसिदयांकुरुषेऽबिकेत्वंतान्मोहमंत्रनिपुणान्प्रथयस्यलंच ॥२५॥ [illegible]मीदृक्तथाकोऽपिवेदादि[illegible]लंगु**
**णस्यतुर्यस्यतेनमथितान्यसदागमानि ॥त्वांगोपयंतिनिपुणाःकवयःकलौवैत्वत्कल्पितान्सुरगणानपिसंस्तुवंति॥२६॥ [illegible]तुष्टीधृतिःकांतिशांती[illegible]**

[illegible]पासकान्
विधायतवभक्तिभावात्विमुखान्कुर्वंतीतिमन्येहं तत्तस्माद्धेतोस्तवोपासनांपरित्यजंतिस्वभा[illegible]॥२४॥ननुमद्गुणैरेवतेषांबुद्धिर्विपरीतामयैवंकृतेतिभ[illegible]कुर्वंतियेतवेति
॥ हेंबिकेमातर्येपुरुषाःस्वोक्तागमैः पुरुषप्रणीतागमैःकथंभूतैर्हरिहरार्चनभक्तियोगैर्हरिह[illegible]र्चनभ[illegible]तिपादकैस्तादृशागमैस्तदुपदेशैरित्यर्थः ॥ नराग्र्यान्[illegible]ऽघशांत्यै ॥ क्षमायां[illegible]तेषांसंबंध
सामान्येषष्ठीतान्नकुप्यसीत्यर्थः॥किंच॥तेषुदयांचकुरुषे॥किंच॥तान्मोहमंत्रनिपुणान्वश्याकर्षणादिमंत्रनिष्णातानलंपूर्णंप्रथयसिविस्तारयसि॥धनादिनावं[illegible]तेसदासर्वदेवेषुदेविप्रसिद्धा[illegible]दित्वद
न्यदेवतोपासनातवेष्टानाऽस्तितर्हितद्देवतोपासकानांतद्देवतामंत्रागमोपदेष्टृणांचकल्याणंकथंकरोषिनाशयोग्याहिते ॥ करोषिचकल्याणंयत्किंचित्क्षुल्लकफल[illegible]रेवेति
ज्ञायते ॥ तस्मात्त्वयैवस्वगुणैःप्रारब्धवशात्तेषांविपरीताबुद्धिःकृतेतिनिश्चीयतइति ॥२५॥ ननुयद्यहमेवस्वगुणैस्तेषांविपरीतबुद्धिंकरोमितर्हिसत्ययुगेऽपितथाविधा[illegible]कु
तःसंतीतिचेत्तत्राह तुर्येयुगेइति॥तुर्येसत्ययुगेतुर्यगुणस्याऽतिशुद्धसत्त्वगुणस्यमिश्रितस्यगुणत्रयापेक्षयातुर्यत्वात् ॥ तस्यतुर्यगुणस्याऽतिबलंप्राबल्यंभवति॥तेनहेतुनासत्य[illegible]न्यसच्छा
स्त्राणिमथितान्युन्मथितानिभवंति॥ कलौतुतुर्यगुणस्याऽभावाद्गुणत्रयस्याऽतिप्रबलत्वात्कवयोनिपुणाःकवित्वाभिमानिनस्त्वांगोपयंतिनोपासतेमंदभाग्यत्वादथचत्वत्कल्पि[illegible]हरिब्रह्मादीन्सुरा
न्संस्तुवंतिभजंतेइत्यर्थः ॥ अयंभावः सत्ययुगेसर्वेउत्तमप्रारब्धवंतःपुण्यजनाः संति ततस्त्वयातस्मिन्युगेसुखदायकःसत्त्वगुणएवस्थापितस्तदनुगुणास्वोपास[illegible]स्थापिता ॥ कलियुगे
तुदुष्टप्रारब्धत्वात्तेदुःखदायकागुणास्त्वयास्थापितास्सद्गुणानुरोधेनचस्वाऽतिरिक्तदेवानामल्पफलदानांचोपासनास्थापितेतितो[illegible]सर्वेत्वदाराधकाः[illegible]न्यदेवताराधकाइति ॥ २६ ॥

अस्त्विवयंपामराणांकथात्वद्रुपासकास्तुधन्याएवेत्याह ध्यायंतीति ॥ तदुक्तमुमासंहितायां ॥ तेधन्याःकृतकृत्याःस्युर्धन्यास्तैर्कुलम् ॥ यथोच ... ीनंश्रीदेव्यांपरसंविदीति ॥ २७ ॥ अधुनामायाविशिष्टब्रह्मरूपिण्याभगवत्याःपुंप्रकृत्यात्मकत्वात्केवलप्रकृतिरूपत्वेनापितांवर्णयतिचिच्छक्तिरिति ॥ चिच्छक्तिशब्देनचैतन्यमुच्यते ॥ तदुक्तंसंक्षेपश ... ॥ चिच्छक्तिःपरमेश्वरस्य विमलाचैतन्यमेवोच्यतइति ॥ हेमातः साचिच्छक्तिःपरमात्मन्यस्तितेनकारणेनसोपिपरमात्माऽव्यक्तोनामरूपात्मकोभवतितथाजगत्सुविदितःप्रसिद्धस्तथाभवकृत्यकर्ता ... सृष्टिस्थितिसंहतिकर्ताभवति ॥ कःपुरुषोस्मात्परमात्मनोन्यस्त्वद्विरहितः स्वशक्त्यैवाऽमुष्मिन्प्रपंचेकर्तुंविहर्तुंतथासंचलितुंप्रभवति नकोऽपीत्यर्थः ॥ यद्यस्तितर्हितत्रापित्वंशक्तिरूपाभवसि ... त्वंसकलकारणामहनीयेतिभावः ॥ तदुक्तंदक्षिणामूर्तिसंहितायाम् ॥ शक्त्याविनाशिवेसूक्ष्मेनामधामनविद्यतइति ॥ २८ ॥ ननुमाभूच्चिच्छक्तिस्तत्त्वान्येवचतुर्विंशतिः ...

ध्यायंतिमुक्तिफलदांभुवियोगसिद्धांविद्यांपरांचमुनयोऽतिविशुद्धसत्त्वाः ॥ तेनाप्नुवंतिजननीजठरेतुदुःखंधन्यास्तएवमनुजा ... ॥ २७ ॥ चिच्छक्तिरस्तिपरमात्मनितेनसोपिव्यक्तोजगत्सुविदितोभवकृत्यकर्ता ॥ रेश्वरःपुरुषस्त्वयाविरहितःप्रभवत्यमुष्मिन्कर्तुंविहर्तुमपि ... ॥ २८ ॥ तत्त्वानिचिद्विरहितानिजगद्विधातुंकिंवाक्षमाणिजगदंबयतोजडानि ॥ किंचेंद्रियाणिगुणकर्मयुतानिसंतिदेवित्वयाविरहितानि ... ॥ २९ ॥ देवामखेष्वपिहुतंमुनिभिःस्वभागंगृह्णीयुरंबविधिवत्प्रतिपादितंकिम् ॥ स्वाहानचेत्त्वमसितत्रनिमित्तभूतातस्मात्त्वमेवननुदेव्यास्तु ... ॥ ३० ॥ सर्वंत्वयेदमखिलंविहितंभवादौत्वंपासिवैहरिहरप्रमुखान्दिगीशान् ॥ कालेऽत्सिविश्वमपितेचरितंभवाद्यंजानंतिनैवमनुजाःक्व ... ॥ ३१ ॥ हत्वाऽसुरंमहिषरूपधरंमहोग्रंमातस्त्वयासुरगणःकिलरक्षितोऽयम् ॥ कांतेस्तुतिंजननिमंदधियोविदामोवेदागतिंतवयथार्थतयानजग्मुः ॥ ३२ ॥ कार्यंकृतंजगतिनोयदसौदुरात्मावैरीहतोभुवनकंटकदुर्विभाव्यः ॥ कीर्तिःकृतानजगत्सुकृपाविधेयाप्यस्मांश्चपाहिजननिप्रथितप्रभावे ॥ ३३ ॥ व्यासउवाच ॥ एवंस्तुतासुरैर्देवीतानुवाचमृदुस्वरा ॥ अन्यत्कार्यंचदुःसाध्यंब्रुवंतुसुरसत्तमाः ॥ ३४ ॥

तिचेत्तत्राह तत्त्वानीति ॥ चिद्विरहितानिचिच्छक्तिविरहितानीत्यर्थः ॥ तान्यपिजडत्वान्नजगत्कर्तुंफलंप्रदातुंवासमर्थानीत्यर्थस्तथैवेंद्रियाण्यपीतिसंपिंडितोर्थः ॥ २९ ॥ अस्माकंदेवानांतुसर्वभावेनत्वमेवपालयित्र्यसीत्याह देवामखेष्वपीति ॥ हेंऽबत्वंचेत्स्वाहारूपा ... ज्ञेषुनिमित्तभूतासाधनभूतानाऽसितर्हिमुनिभिर्विधिवत्प्रतिपादितंमखेषुहुतंस्वभागंकिंदेवागृह्णीयुर्नगृह्णीयुरित्यर्थः ॥ यस्मादेवंतस्मात्त्वमेवदेवान्पालयसिदेवेषुपालितेषुदेवपालितंविश्वंत्वयैवपालितं ... तीत्यर्थः ॥ ३० ॥ हेभगवति वयंस्तुतिंकर्तुंप्रवृत्ताएवकेवलंनस्तुतिंकर्तुंयोग्यास्तवसकलकारणायामनोवाचामगोचरत्वात्तवचरितस्यब्रह्मादिबुद्धीनामप्यविषयत्वादित्याह सर्वंत्वयेदमिति ॥ मनु ... इत्युपलक्षणंदेवानाम् ॥ ३१ ॥ नकेवलंब्रह्मादयएवत्वांनजानंतीति किंतुवेदाअपितवगतिंयथार्थतयानजानंति तदाकांतेस्तुतिंकर्तुंवयंजानीमइत्याह हत्वासुरमिति ॥ यथार्थतयायाथातथ्येन ... जग्मुःनप्रापुः ॥ तथाचश्रुतिः ॥ यतोवाचोनिवर्तंतइति ॥ ३२ ॥ अधुनाऽवतारंगृहीत्वादेव्याकृतमुपकारंवर्णयंति कार्यंकृतमिति ॥ भुवनकंटकश्चासौदुर्विभाव्यश्चेतिकर्मधारयः ॥ कृपाविधेयाजग ... हेजननि प्रथितप्रभावात्वमस्मांश्चपाहीत्यन्वयः ॥ ३३ ॥ ३४ ॥ ॥ ५ ॥ ॥ ५ ॥

॥ ३५ ॥ ३६ ॥ ३७॥ अपराधसहस्रेति ॥ सर्वनिजजनेषुसत्स्वपिपुत्रापराधंनिर्व्याज[illegible] [illegible]यामातैवसहतेनान्यइतिज्ञात्वा सर्वजगद्योनिंमातरंसर्वजगतोदेवींकुतोजनानभजंते कुतःस्वकल्याणात्प्र च्यवंतेइतिजनानाक्रोशति ॥ तथाचव्यासस्तूत्रम् ॥ योनिश्चगीयतइति ॥ ३८ ॥ न[illegible] [illegible]लंभगवत्याजगद्योनित्वंकिंतुसर्वजीवसखित्वमप्यस्तीतिवक्तुंद्वासुपर्णेतिश्रुतिमर्थतःपठति ॥ द्वौसुपर्णाविति ॥ अस्मिन्देहरूपे वृक्षेद्वौसुपर्णौपक्षिसदृशौद्वौजीवपरमात्मानौस्तः ॥ तयोर्निरंतरं[illegible]ख्यमस्तिकदाप्युभयोर्वियोगाऽभावात् एवंरीत्यानयोस्तृतीयःसखानैवाऽस्ति ॥ यएतस्यजीवस्याऽपराधंसहेत इत्यर्थः ॥ ३९॥ यस्मादेवंतस्माज्जीवःस्वसखायंपरमेश्वरींभगवतींपरसंविदंहित्[illegible]किंनुकरिष्यतिस्वकल्याणं नहिशत्रुतःकल्याणंसंभवति॥नवागत्यंतरमस्तीत्यर्थः ॥ तस्मादियमेवभगवतीपितृमातृ

यदायदाहिदेवानांकार्यंस्याद्अतिदुर्घटम् ॥ स्मर्तव्याऽहंत[illegible]शीघ्रंनाशयिष्यामिचाऽऽपदम् ॥३५॥ देवाऊचुः ॥ सर्वंकृतंत्वयादेविकार्यंनःखलुसांप्रतम्॥यद यंनिहतःशत्रुरस्माकंमहिषासुरः ॥ ३६ ॥ स्मरिष्यामो[illegible]यथातेंबसदैवपदपंकजम् ॥ तथाकुरुजगन्मातर्भक्तिंत्वय्यप्यचंचलाम्॥३७॥अपराधसहस्राणिमा तैवसहतेसदा ॥ इतिज्ञात्वाजगद्योनिंनभजंतेकुतो[illegible]जनाः ॥३८॥ द्वौसुपर्णौतुदेहेऽस्मिंस्तयोःसख्यंनिरंतरम् ॥ नान्यःसखातृतीयोऽस्तियोपराधंसहेतहि ॥ ॥३९॥ तस्माज्जीवःसखायंत्वांहित्वाकिंनुकरिष्यति ॥ पापात्मामंदभाग्योऽसौसुरमानुषयोनिषु ॥४०॥प्राप्यदेहंसुदुष्प्रापंनस्मरेत्त्वांनराधमः ॥ मनसाक र्मणावाचाब्रूमःसत्यंपुनःपुनः ॥४१॥ सुखेवाप्यथवादुःखेत्वंनःशरणमद्भुतम् ॥पाहिनःसततंदेविसर्वैस्तववरायुधैः ॥ ४२ ॥ अन्यच्छ[illegible]रायण[illegible]स्त्वत्पदां बुजरेणुतः ॥ व्यासउवाच ॥ एवंस्तुतासुरैर्देवीतत्रैवांतरधीयत ॥४३॥ विस्मयंपरमंजग्मुर्देवास्तांवीक्ष्यनिर्गताम् ॥ ॥ इतिश्रीदे[illegible] ॥ नमोदेविवि[illegible]पंचम स्कंधेएकोनविंशोऽध्यायः ॥१९॥ जनमेजयउवाच ॥ अथाऽद्भुतंवीक्ष्यमुनेप्रभावंदेव्याजगच्छांतिकरंवरंच ॥ नतृप्तिरस्ति[illegible]मद्दिक्कथाकोऽपिवेदादि[illegible]मुख पद्मजातम् ॥१॥ अंतर्हितायांचतदाभवान्यांचक्रुश्चकिंदेवपुरोगमास्ते[illegible]श्चरित्रंपरमंपवित्रंदुराऽऽपमेवाल्पपुण्यैर्न[illegible]तुष्टिर्धृतिःकांतिशांति[illegible]तिकथा ऽमृतेनभिन्नोऽल्पभाग्यात्पटुकर्णरंध्रः ॥ पीतेनयेनाऽमरतांप्रयाति[illegible]नपिबंतिसादरम् ॥३॥ लीलाचरित्रंज[illegible]ऽवशांत्यै ॥ क्षमायंगत्रामुनी नाम् ॥ संसारवार्धेस्तरणंनराणांकथंकृतज्ञाहिपरित्यजेयुः॥४॥मुक्त[illegible]याहेतोर्म[illegible]वश्चसंसारिणोरोगयुताश्चकेचित् ॥ तेषांतुसदासर्वदेवेषुदेविप्रसिद्धांवेद विदोवदंति ॥ ५ ॥ तथाविशेषेणमुनेनृपाणांधर्मार्थकामेषुसदारतानाम् [illegible]र्युयद[illegible]यस्मात्खलुतत्पिबंतिकथंनपेयंरहितैश्चतेभ्[illegible] [illegible]मेघांतक

सखिस्थानासर्वैर्जीवैराराध्येतिभावः ॥ तथाचश्रुतिः ॥ द्वासुपर्णासयुजासखायेति ॥ ४० ॥ ४[illegible] [illegible]म् ४३ ॥ इतिश्रीदेवीभागवततिलकेपंचमस्कंधेएकोनविंशोऽध्यायः ॥ [illegible] ॥ ॥ १९ ॥ [illegible]र्थः ॥ [illegible] ॥ ते[illegible]
॥ पंचाशद्भिरथश्लोकैरंतर्धानोत्तरंतुयत्॥अभूद्वृत्तंजगत्क्षेमतदत्रैवोपवर्ण्यते ॥ १॥ श्रीदेव्याअंतर्धानोत्तरंजनमेजय[illegible] अथेति॥अद्भुतप्रभावंवीक्ष्यतत्कथामृतंशृण्व[illegible] [illegible]तृप्तिर्नास्तीत्यन्वयः ॥१॥ नराणांमध्येऽल्पपुण्यैरित्यन्वयः ॥ तद्दुरापमेवश्रुत्वेतिशेषः ॥ २ ॥ तच्छ्रुत्वाअल्पभाग्याद्भिन्नःकस्तृप्तिमाप्नोतीत्यर्थः ॥ ३ ॥ [illegible] ॥ तेभ्योमक्तेभ्यो[illegible]रित्यन्वयः ॥ ६ ॥ ॥ १९ ॥

इत्येवमनुमेयमित्यन्वय ॥ ७ ॥ ८ ॥ उदरमेवोदरं तत्पूर्तिमात्रमपिनैवाऽऽप्नुवंतीत्यर्थः ॥ ९ ॥ १० ॥ भगवत्याआराधने [illegible] कपारलौकिकसुखवधमा [illegible] पंचसिद्धयतीतिप्रकरणार्थः ॥ ११ ॥ १२ ॥ १३ ॥ कथितमिति ॥ तेत्वयांतर्धानंगतेत्युक्तंतत्रांतर्धानोत्तरंसाभुवनेश्वरीस्वर्गेवामृत्युलोके [illegible] तातर्वदेत्यर्थः ॥ १४ ॥ लयंगतेति ॥ तास्म [illegible] स्थूलेलयंगतास्थूलशरीर



यैःपूजितापूर्वभवेभवानीसत्कुंदपुष्पैरथचंपकैश्च ॥ बैल्वैर्दलैस्तेभुविभोग [illegible] नवंतीत्यनुमेयमेवम् ॥ ७ ॥ येभक्तिहीनाःसमवाप्य [illegible] भारत भूमिभागे ॥ यैर्नार्चितातेधनधान्यहीनारोगान्विताःसंततिवर्जिताश्च ॥ [illegible] तिनित्यंकिलदासभूताआज्ञाकराःकेवलभार [illegible] र्थपराःकदाऽपिनैवाप्नुवंत्यौदरपूर्तिमात्रम् ॥ ९ ॥ अंधाश्चमूकाब [illegible] ष्ठान्वितायेभुविदुःखभाजः ॥ तत्रानुमा [illegible] तेनायथा [illegible] तः मततंभवानी ॥ १० ॥ येराजभोगान्वितऋद्धिपूर्णाःसंसेव्यमाना [illegible] ॥ तेन [illegible] दृश्यंतियेवाविभवैःसमेतास्तैःपूजितां [illegible] ॥ ११ ॥ [illegible] मात्स त्यवतीसूनोदेव्याश्चरितमुत्तमम् ॥ कथयस्वकृपांकृत्वादयावानसि [illegible] श्वप ॥ १२ ॥ हत्वातंमहिषंपापंस्तुतासंपूजिता [illegible] सि ॥ नारीसंगमह [illegible] क्ष्मीःसर्व तेजःसमुद्भवा ॥ १३ ॥ कथितंतेमहाभागगतांतर्धानमाशुसा ॥ स्वर्गेवामृत्युलोकेवासंस्थिताभुवनेश्वरी ॥ १४ ॥ लयं [illegible] अथवाकुरुसंग्रामं [illegible] ता ॥ अथवाहेमशैलेसातत्त्वतोमेवदाऽधुना ॥ १५ ॥ व्यासउवाच ॥ पूर्वमयातेकथितंमणिद्वीपंमनोहरम् ॥ क्रीडास्थानंसदादेव्या [illegible] गच्छयथा [illegible] देव्यास्तु [illegible] १६ ॥ यत्रब्रह्माहरिःस्थाणुःस्त्रीभावंतेप्रपेदिरे ॥ पुरुषत्वंपुनःप्राप्यस्वानिकार्याणिचक्रिरे ॥ १७ ॥ यःसुधासिंधुमध्येऽस्तिद्वीपःपरमशोभनः ॥ [illegible] सदात त्रविहारंकुरुतेंबिका ॥ १८ ॥ स्तुतासंपूजितादेवैःसातत्रैवगताशिवा ॥ यत्रसंक्रीडतेनित्यंमायाशक्तिःसनातनी ॥ १९ ॥ देवास्तांनिर्गतांवीक्ष्यदेवींसर्वे श्वरींतथा ॥ रविवंशोद्भवंचक्रुर्भूमिपालंमहाबलम् ॥ २० ॥ अयोध्याऽधिपतिंवीरंशत्रुघ्ननामपार्थिवम् ॥ सर्वलक्षणसंपन्नंमहिषस्याऽऽसनेशुभे ॥ २१ ॥ दत्त्वाराज्यंतदातस्मैदेवाइंद्रपुरोगमाः ॥ स्वकीयैर्वाहनैःसर्वेजग्मुःस्वान्यालयानिते ॥ २२ ॥ गतेषुतेषुदेवेषुपृथिव्यांपृथिवीपते ॥ धर्मराज्यंबभूवाऽथप्र जाश्चसुखितास्तथा ॥ २३ ॥ पर्जन्यःकालवर्षीचधरा [illegible] न्यगुणाऽऽवृता ॥ पादपाःफलपुष्पाढ्याबभूवुःसुखदाःसदा ॥ २४ ॥ गावश्चक्षीरसंपन्नावटो घ्न्यःकामदानृणाम् ॥ नद्यःसुमार्गगाःस्वच्छाःशीतोदाःख [illegible] युताः ॥ २५ ॥ ब्राह्मणावेदतत्त्वाश्चयज्ञकर्मरतास्तथा ॥ क्षत्रियाधर्मसंयुक्तादानाऽध्यय नतत्पराः ॥ २६ ॥ शस्त्रविद्यारतानित्यंप्रजारक्षणतत्पराः ॥ न्यायदंडधराःसर्वेराजानःशमसंयुताः ॥ २७ ॥



स्थभूम्यादिक्रमेणस्वात्मनिलीनावेत्यर्थः ॥ हेमशैलेसुमेरौवा ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ मायाशक्तिः ॥ मायाशक्तिविशिष्टब्रह्मरूपिणीभगवतीश्रीभुवनेश्वरीयत्रमणिद्वीपेवर्ततेतत्रतदंशभूता सागतेत्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ घटवद्ऊधोयासांताघटोघ्न्यः [illegible] धसोनङित्यनङ्गादेशेबहुव्रीहेरूधसोङीषितिङीप् ॥ २५ ॥ २६ ॥ २७ ॥ ॥

अविरोधस्तुभूतानांसर्वेषांसंबभूवह ॥ आकराधनदानृणांव्रजागोयूथसंयुताः ॥ २८ ॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चनृपसत्तम ॥ देवीभक्तिपराःसर्वेसं बभूवुर्धरातले ॥ २९ ॥ सर्वत्रयज्ञयूपाश्चमंडपाश्चमनोहराः ॥ मखैःपूर्णाधराश्चासन्ब्राह्मणैःक्षत्रियैःकृतैः ॥ ३० ॥ पतिव्रतधरानार्यःसुशीलाःसत्यसं युताः ॥ पितृभक्तिपराःपुत्राआसन्धर्मपरायणाः ॥ ३१ ॥ नपाखंडंनवाऽधर्मःकुत्राऽपिपृथिवीतले ॥ वेदवादाःशास्त्रवादानान्येवादास्तथाऽभवन् ॥ ॥ ३२ ॥ कलहोनैवकेषांचिन्नदैन्यंनाऽशुभामतिः ॥ सर्वत्रसुखिनोलोकाःकालेचमरणंतथा ॥ ३३ ॥ सुहृदांनवियोगश्चनापदश्चकदाचन ॥ नाऽना वृष्टिर्नदुर्भिक्षंनमारीदुःखदानृणाम् ॥ ३४ ॥ नरोगोनचमात्सर्यंनविरोधःपरस्परम् ॥ सर्वत्रसुखसंपन्नानरानार्यःसुखान्विताः ॥ ३५ ॥ क्रीडंतिमानवाः सर्वेस्वर्गेदेवगणाइव ॥ नचौरानैवपाखंडावंचकादंभकास्तथा ॥ ३६ ॥ पिशुनालंपटाःस्तब्धानबभूवुस्तदानृप ॥ नवेदद्वेषिणःपापामानवाःपृथिवीप ते ॥ ३७ ॥ सर्वधर्मरतानित्यंद्विजसेवापरायणाः ॥ त्रिधात्वात्सृष्टिधर्मस्यत्रिविधाब्राह्मणास्ततः ॥ ३८ ॥ सात्त्विकाराजसाश्चैवतामसाश्चापरे ॥ स र्वेवेदविदोदक्षाःसात्त्विकाःसत्त्ववृत्तयः ॥ ३९ ॥ प्रतिग्रहविहीनाश्चदयादमपरायणाः ॥ यज्ञांस्तेसात्त्विकैरन्नैःकुर्वाणाधर्मतत्पराः ॥ ४० ॥ नमोदेविविं ञ्ञावि धानैश्चपशुभिर्नकदाचन ॥ दानमध्ययनंचैवयजनंतुतृतीयकम् ॥ ४१ ॥ त्रिकर्मरसिकास्तेवैसात्त्विकाब्राह्मणानृप ॥ राजधर्मोद्दक्तथाकोऽपिवेदादिपुरो हिताः ॥ ४२ ॥ षट्कर्मनिरताःसर्वेविधिवन्मांसभक्षकाः ॥ यजनंयाजनं[illegible]तंतथैवचप्रतिग्रहः ॥ ४३ ॥ अध्ययनं[illegible]:तुष्टीधृतिःकांतिशांती[illegible] ॥ तामसाःक्रोधसंयुक्तारागद्वेषपराःपुनः ॥ ४४ ॥ राज्ञांकर्मकरानित्यं[illegible]रताः ॥ महिषेनिहतेसर्वेसुखिनोवेदत[illegible]ऽघशांत्यै ॥ क्षमायांर्नि नि णौतादानधर्मपरास्तथा ॥ क्षत्रियाःपालनेयुक्तावैश्यावणिजवृत्तय[illegible]याहेतोर्म[illegible]वाणिज्यगोरक्षाकुसीदवृत्तयःपरे ॥ एवंभूतेसदासर्वदेवेषुदेविप्रसिद्धा[illegible] तिते ॥ ४७ ॥ अनुद्वेगःप्रजानांवैसंबभूवधनाऽऽगमः ॥ बहुक्षीराःशु[illegible]र्युदर्[illegible]ववहूदकाः ॥ ४८ ॥ वृक्षाबहुफलाश्चाऽऽस[illegible] ऽऽधयोनेतयःक्वाऽपिप्रजानांदुःखदायकाः ॥ ४९ ॥ ननिधनमुपयांतिप्रा[illegible]धर्मेघांतककालेसकलविभवयुक्तारोगहीनाःसदैव ॥ निग[illegible] ॥ [illegible] श्चंडिकायाश्चरणसरसिजानांसेवनेदक्षचित्ताः ॥ ५० ॥ ॥ इतिश्रीदेवीभागवते[illegible]महापुराणे पंचमस्कंधे विंशोऽध्यायः ॥ २० ॥ [illegible] ॥

अर्धाधिकैःषष्टिपद्यैःशुंभासुरकथोच्यते ॥ स्वस्थानाच्चामरादीनांच्यवनंसम्यगीर्यते ॥ १ ॥ देव्याश्चरित्रमेकमुक्त्वापुनरपिदेव्याश्चर्वदेदद्वितीयंव्यासःकथयतीत्याह ... ॥१॥२॥३॥ परिचरैः



व्यासउवाच ॥ शृणुराजन्प्रवक्ष्यामिदेव्याश्चरितमुत्तमम् ॥ सुखदंसर्वजंतूनां... प्रणाशनम् ॥ १ ॥ यथाशुंभोनिशुंभश्चभ्रातरौबलवत्तरौ ॥ बभूवतुर्महावीरावववध्यौपुरुषैःकिल ॥ २ ॥ बहुसेनान्वितौशूरौदेवानांदुःखदौसदा ... रोमदोऽसिसकौबहुदानवसंयुतौ ॥ ३ ॥ हतावं...ऽतीवदारुणे ॥ देवानांचहितार्थायसर्वैःपरिचरैःसह ॥ ४ ॥ चंडमुं... बीजोऽतिदारुणः ॥ धूम्रलोचननामाचनि...तनायथा ... तान्निहत्यसुराणांसाजहारभयमुत्तमम् ॥ स्तुतासंपूजितादेवैर्गिरौहे...म्त्वाः ॥ तेन ६ ॥ राजोवाच ॥ कावेतावसुरावादौ... ॥ ३९ ॥ ... सं स्थापितौचेहस्त्रीविध्यत्वंकुतोगतौ ॥ ७ ॥ तपसावरदानेनकस्यजातौ...कथंचनिहतौसर्वंकथयस्वसविस्तरम् ... ॥ नारीसंगेमह... शृणुराजन्कथांदिव्यांसर्वपापप्रणाशिनीम् ॥ देव्याश्चरितसंयुक्तांसर्वार्थफलदां... ॥ ९ ॥ पुराशुंभनिशुंभौद्वावसुरौभूमिमं... अथवाकुरुसंग्राम... भ्रातरौशुभदर्शनौ ॥ १० ॥ तौप्राप्तयौवनौचैवचरेतुस्तपउत्तमम् ॥ अन्नोदकंपरित्यज्यपुष्करेलोकपावने ॥ ११ ॥ वर्षाणामयुतं...गच्छयथा...देव्यास्तौ॥ एकत्रैवाऽऽसनंकृत्वातेपातेपरमंतपः ॥ १२ ॥ तयोस्तुष्टोऽभवद्ब्रह्मासर्वलोकपितामहः ॥ तत्राऽऽगतश्चभगवानारुह्यवरटापतिम्...शोभनः ॥ ...वंजगत्स्रष्टाद्दृष्ट्वाध्यानपरौस्थितौ ॥ उत्तिष्ठतंमहाभागौतुष्टोऽहंतपसाकिल ॥ १४॥ वांछितंवावरंकामंददामिब्रुवतामिह ॥ कामदोऽहंसमायातो...तपसोबलम् ॥ १५ ॥ व्यासउवाच ॥ इतिश्रुत्वावचस्तस्यप्रबुद्धौतौसमाहितौ ॥ प्रदक्षिणक्रियांकृत्वाप्रणामंचक्रतुस्तदा ॥१६॥ दंडवत्प्रणिपातंचकृत्वातौदुर्बलाकृती ॥ ऊचतुर्मधुरांवाचंदीनौगद्गदयागिरा ॥ १७ ॥ देवदेवदयासिंधोभक्तानामभयप्रद ॥ अमरत्वंचनौब्रह्मन्देहितुष्टोऽसिचेद्विभो ॥ १८ ॥ मरणादपरंकिंचिद्भयंनाऽस्तिधरातले ॥ तस्माद्भयात्त्रस्तौयुष्माकंशरणंगतौ ॥ १९ ॥ त्राहित्वंदेवदेवेशजगत्कर्तःक्षमानिधे ॥ परिस्फोटयविश्वात्मन्सद्योमरणजंभयम् ॥ २० ॥ ब्रह्मोवाच ॥ किमिदंप्रार्थनीयंवोविपरीतंतुसर्वथा ॥ अदेयंसर्वथासर्वैःसर्वेभ्योभुवनत्रये ॥ २१ ॥ जातस्यहिध्रुवंमृत्युर्ध्रुवंजन्ममृतस्यच ॥ मर्यादाविहितालोकेपूर्वंविश्वकृताकिल ॥ २२ ॥ मर्तव्यंसर्वथासर्वैःप्राणिभिर्नात्रसंशयः ॥ अन्यंप्रार्थयतांकामंददामियच्चवांछितम्॥ ॥ २३ ॥ व्यासउवाच ॥ तदाकर्ण्यवचस्तस्यसुविमृश्यचदानवौ ... ऊचतुःप्रणिपत्याऽथब्रह्माणंपुरतःस्थितम् ॥ २४ ॥



सेवकैःसहहताविव्यन्वयः ॥४॥५॥६॥ हेमाचलेशुंभेद्यत्यंतंसूत्ररूपेणचरित्रमुक्तंतद्व्याख्यातोप्रराजापृच्छति कावेताविति ॥७॥८॥९॥१०॥११॥१२॥ वरटापतिंहंसम् ॥१३॥१४॥ तपसोबलमिति॥ इतिब्रह्मोवाचेतिशेषः ॥ १५ ॥१६॥१७ ॥१८॥१९॥२० ॥ वोयुष्माकमिदंप्रार्थनीयंसर्वथा...परीतंकिंविपरीतमेवकथमित्यर्थः ॥ विपरीतत्वमेवाह ॥ अदेयमिति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

पुरुषैरमरैर्वैश्वमानवैर्मृगपक्षिभिः ॥ अवध्यत्वंकृपासिंधोदेहिनौवांछितंवरम् ॥ २५ ॥ नारीबलवतीकाऽस्तियानौनाशंकरिष्यति ॥ नबिभीवःस्त्रियः कामंत्रैलोक्येसचराचरे ॥ २६ ॥ अवध्यौभ्रातरौस्यातांनरेभ्यः[illegible]जोद्भव ॥ अयंनस्त्रीजनेभ्यश्चस्वभावादबलाहिसा ॥ २७ ॥ व्यासउवाच ॥ इतिश्रुत्वातयोर्वाक्यंप्रददौवांछितंवरम् ॥ ब्रह्माप्रसन्नमनसाजगाम[illegible]स्वमालयम् ॥ २८ ॥ गतेऽथभवनेतस्मिन्दानवौस्वगृहंगतौ ॥ भृगुंपुरोहितंकृत्वाचक्रतुःपूजनंतदा ॥ २९ ॥ शुभेदिनेसुनक्षत्रेजातरूपमयंशुभ[illegible] ॥ कृत्वासिंहासनंदिव्यंराज्यार्थंप्रददौमुनिः ॥ ३० ॥ शुंभायज्येष्ठभूतायददौराज्यासनंशुभम् ॥ सेवनार्थंतदैवाशुसंप्राप्तादानवोत्तमाः ॥ ३१ ॥ चंडमुंडौमहावीरौभ्रातरौबलदर्पितौ ॥ संप्राप्तौसैन्यसंयुक्तौरथवाजिगजान्वितौ ॥ ३२ ॥ धूम्रलोचननामाचतद्रूपश्चंडविक्रमः ॥ शुंभंचभूपतिंश्रुत्वातदाऽगाद्बलसंयुतः ॥ ३३ ॥ रक्तबीजस्तथाशूरोवरदानबलाधिकः ॥ अक्षौहिणीभ्यांसंयुक्तस्तत्रैवागत्यसंगतः ॥ ३४ ॥ तस्यैकंकारणंराजन्संग्रामेयुध्यतःसदा ॥ देहाद्रुधिरसंपातस्तस्यशस्त्राहतस्यच ॥ ३५ ॥ जायतेचयदाभूमावुत्पद्यंतेह्यनेकशः ॥ तादृशाःपुरुषाःक्रूराबहवःशस्त्रपाणयः ॥ ३६ ॥ संभवंतितदाकारास्तद्रूपास्तत्पराक्रमाः ॥ युद्धंपुनस्तेकुर्वंतिपुरुषारक्तसंभवाः ॥ ३७ ॥ [illegible]महावीर्यःसंग्रामेऽतीवदुर्जयः ॥ अवध्यःसर्वभूतानांरक्तबीजोमहासुरः ॥ ३८ ॥ अन्येचबहवःशूराश्चतुरंगसमन्विताः ॥ शुंभंचनृपतिं[illegible]काः ॥ ३९ ॥ असंख्यातातदाजातासेनाशुंभनिशुंभयोः ॥ पृथिव्याःसकलंराज्यंगृहीतंबलवत्तया ॥ ४० ॥ सेनायोगंतदाकृत्वा[illegible]गाम तरसास्वर्गेशचीपतिजयायच ॥ ४१ ॥ चकाराऽसौमहायुद्धंलोकपालैःसमंत[illegible]त्रहावज्रपातेनताडयामासवक्षसि ॥ ४२ ॥ [illegible]पपातदानवाऽनुजः ॥ भग्नंबलंतदातस्यनिशुंभस्यमहात्मनः ॥ ४३ ॥ भ्रातरं[illegible]भःपरबलार्दनः ॥ तत्राऽऽगत्यसुरान्सर्वा[illegible]॥ कृतयुद्धंमहत्तेनशुंभेनाक्लिष्टकर्मणा ॥ निर्जितास्तुसुराःसर्वेसेंद्राःपाल[illegible] ॥ ऐंद्रंपदंतदातेनगृहीतंबलवत्तया ॥ क[illegible]मन्वितम् ॥ ४६ ॥ त्रैलोक्यंयज्ञभागाश्चहृतास्तेनमहात्मना ॥ नंदनं[illegible]तोभून्महासुरः ॥ ४७ ॥ सुधायाश्चैवपानेनसु[illegible]बेरंसचनिर्जित्यतस्यराज्यंचकारह ॥ ४८ ॥ अधिकारंतथाभानोःशशिनश्चच[illegible]चैवविनिर्जित्यजग्राहतत्पदंतथा ॥ ४९ ॥ वरुणस्यैतथा[illegible]चकारस्वन्हिकर्मच ॥ वायोःकार्यंनिशुंभश्चचकारस्वबलान्वितः ॥ ५० ॥ ततोदेवाविनिर्धू[illegible]हृतश्रियः ॥ संत्यज्यनंदनंसर्वेनिर्ययुर्गिरि[illegible]रे ॥ ५१ ॥

त्हताधिकारास्तेसर्वेबभ्रमुर्विजनेवने ॥ निरालंबानिराधारानिस्तेजस्कानिरायुधाः ... ॥ ५२ ॥ विचेरुरमराःसर्वेपर्वतानांगुहासुच ॥ उ... शून्येषुन दीनांगह्वरेषुच ॥ ५३ ॥ नप्रापुस्तेसुखंक्काऽपिस्थानभ्रष्टाविचेतसः ॥ ... संचलितुं महाराजदैवाधीनंसुखंकिल ॥ ५४ ॥ बलवंतोम... नसंयुताः ॥ कालेदुःखंतथादैन्यमाप्नुवंतिनराऽधिप ॥ ५५ ॥ चित्रं ... विचतइ... कालस्यैवविचेष्टितम् ॥ यःकरोतिनरंतावद्राज... दातारंयाचकंचैवबलवंतंतथाबलम् ॥ पंडितंविकलंकामंशूरंचा... ॥ ५७ ॥ मखानांचशतंकृत्वाप्राप्यैंद्रासनमु... कालस्यगतिरीदृशी ॥ ५८ ॥ कालःकरोतिधर्मिष्ठंपुरुषंज्ञानसंयुतम् ... पापिष्ठंज्ञानलेशविवर्जितम् ॥ ५९ ॥ ... कालचेष्टिते ॥ ब्रह्मविष्णुहरादीनामपीदृक्कष्टचेष्टितम् ॥ ६० ॥ विष्णु... भोतिसूकरादिषुयोनिषु ॥ हरःकपालीसंज... ॥ ६१ ॥ ॥ इतिश्रीदेवीभागवतेमहापुराणेपंचमस्कंधेभगवतीमाहात्म्येएकविंशोऽध्यायः ॥ २१ ॥ ॥ छ ॥ ॥ व्यासउवाच ॥ प... ... शुंभः शशासह ॥ एवंवर्षसहस्रंतुजगामनृपसत्तम ॥ १ ॥ भ्रष्टराज्यास्ततोदेवाश्चिंतामापुःसुदुस्तराम् ॥ गुरुंदुःखातुरास्तेतुपप्रच्छुः... ॥ ... किं कर्तव्यंगुरोब्रूहिसर्वज्ञस्त्वंमहामुनिः ॥ उपायोऽस्तिमहाभागदुःखस्यविनिवृत्तये ॥ ३ ॥ उपचारपरानूनंवेदमंत्राःसहस्रशः ॥ वांछितार्थकर... सलक्षिताःकिल ॥ ४ ॥ इष्टयोविविधाःप्रोक्ताःसर्वकामफलप्रदाः ॥ ताःकुरुष्वमुनेनूनंत्वंजानासिचतत्क्रियाः ॥ ५ ॥ विधिःशत्रुविनाशाययथोद्दिष्टःसदागमे ॥ तंकुरुष्वाऽद्यविधिवद्यथानोदुःखसंक्षयः ॥ ६ ॥ मं... आंगिरसाऽद्यैवतथात्वंकर्तुमर्हसि ॥ दानवानांविनाशायअभिचारंयथामति ॥ ७ ॥ बृहस्पतिरुवाच ॥ सर्वेमंत्राश्चवेदोक्तादैवाधीनफलाश्चते ॥ नस्वतंत्राःसुरा... शतथैकांतफलप्रदाः ॥ ८ ॥ मंत्राणांदेवतायूयंतेतुदुःखैकभाजनम् ॥ जाताःस्मकालयोगेन किंकरोमिप्रसाधनम् ॥ ९ ॥ इंद्राग्निवरुणादीनांयजनंय... ...र्मसु ॥ तेयूयंविपदंप्राप्ताःकरिष्यंतिकिमिष्टयः ॥ १० ॥ अवश्यंभाविभावानांप्रतीकारोनविद्यते ॥ उपायस्त्वथकर्तव्यइतिशिष्टानुशासनम् ॥ ११ ॥ दे... हिबलवत्केचित्प्रवदंतिमनीषिणः ॥ उपायवादिनोदैवंप्रवदंतिनिरर्थकम् ॥ १२ ॥ दैवंचैवाऽप्युपायश्चद्वावेवाऽभिमतौनृणाम् ॥ केवलंदैवमाश्रित्यन... ...तव्यंकदाचन ॥ १३ ॥



भूतापरादेवीदेवकार्यार्थमुच्यते ॥ १ ॥ देवपराजयोत्तरंजातंवृत्तमाह पराजिताइति ॥ १ ... गुरुंबृहस्पतिम् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ हेआंगिरस अंगिरागोत्रोद्भव ॥ ७ ॥ एकांतफलप्रदाः नियमेनफलप्रदाः ॥ ८ ॥ ९ ॥ तदाइष्टयःकिंकरिष्यंतीत्यर्थः ॥ १० ॥ ११ ॥ ननुदैवमेवप्रबलंवेद्...यःकिमितिकर्तव्यइतिचेत्तत्राह दैवमिति ॥ १२ ॥ सिद्धांतस्त्वयमस्तीत्याह दैवंचैवाप्युपायश्चेति ॥ १३ ॥

॥१४॥१५॥१६॥१७॥१८॥ अनुष्ठानेमुख्योमंत्रःकोवाऽस्तीतिचेत्तत्राह मायाबीजेति ॥ [illegible] मायाविशिष्टब्रह्मणोवाचकः ॥ ह्रींकारउभयात्मकइतिब्रह्मांडपुराणात् ॥ तथाचमायाविशिष्टब्रह्मवाचक भुवनेश्वरीमंत्रेणसामायाविशिष्टब्रह्मरूपिणीभुवनेश्वरीदेवताऽऽराध्येत्यर्थः ॥ तत्पुरश्चरणे [illegible]याबीजपुरश्चरणेरताः आसक्ताइत्यर्थः॥ तत्संख्याचशारदायाम् ॥ प्रजपेन्मंत्रविन्मंत्रंद्वात्रिंशल्लक्षमानतः॥ त्रिःस्वादुयुक्तैर्जुहुयादष्टद्रव्यैर्दशांशतइति ॥ दक्षिणामूर्तिसंहितायांतु ॥ रविलक्षंजपे[illegible]धामितिद्वादशलक्षात्मकंपुरश्चरणमुक्तम् ॥ हालास्यमाहात्म्येतु ॥ एकलक्षजपेनैवसालोक्यंस्याद्विलक्षतः ॥सा

उपायःसर्वथाकार्योविचार्यस्वधियापुनः ॥ तस्माद्ब्रवीमिवःस[illegible]न्संविचार्यपुनःपुनः ॥ १४ ॥ पुराभगवतीतुष्टाजघानमहिषासुरम् ॥ युष्माभिस्तुस्तु तादेवीवरदानंददावथ ॥ १५ ॥ आपदंनाशयिष्यामिसं[illegible]वःसदैवहि ॥ यदायदावोदेवेशाआपदोदैवसंभवाः ॥ १६ ॥ प्रभवंतितदाकामंस्मर्तव्या ऽहंसुरैःसदा ॥ स्मृताहंनाशयिष्यामियुष्माकंपरमाप[illegible] ॥ १७ ॥ तस्माद्धिमाचलेगत्वापर्वतेसुमनोहरे ॥ आराधनंचंडिकायाःकुरुध्वंप्रेमपूर्वकम् ॥ ॥ १८ ॥ मायाबीजविधानज्ञास्तत्पुरश्चरणेरताः ॥[illegible]ानाम्यहंयोगबलात्प्रसन्नासाभविष्यति ॥ १९ ॥ दुःखस्यांतोऽद्ययुष्माकंदृश्यतेनाऽत्रसंशयः ॥त स्मिन्शैलेसदादेवीतिष्ठतीतिमयाश्रुतम् ॥२०॥ स्तुतासंपूजितासद्योवांछितार्थान्प्रदास्यति ॥ निश्चयंपरमंकृत्वागच्छध्वंवोहिमालयम् ॥२१॥ सुराःस र्वाणिकार्याणिसावःकामंविधास्यति ॥ व्यासउवाच ॥ इतितस्यवचःश्रुत्वादेवास्तेप्रययुर्गिरिम् ॥ २२ ॥ हिमालयंमहाराजदेवीध्यानपरायणाः ॥ माया बीजंहृदानित्यंजपंतःसर्वएवहि ॥ २३ ॥ नमश्चक्रुर्महामायांभक्तानामभयप्रदाम् ॥ तुष्टुवुःस्तोत्रमंत्रैश्चभक्त्यापरमयायुताः ॥ २४ ॥ नमोदेविविश्वेश्वरि प्राणनाथेसदानंदरूपेसुरानंददेते ॥ नमोदानवांतप्रदेमानवानामनेकार्थदेभक्तिगम्यस्वरूपे ॥ २५ ॥ नतेनामसंख्यांनतेरूपमीदृक्कथाकोऽपिवेदादिदेवा दिरूपे ॥ त्वमेवाऽसिसर्वेषुशक्तिस्वरूपाप्रजासृष्टिसंहारकालेसदैव ॥ [illegible] स्मृतिस्त्वंधृतिस्त्वंत्वमेवाऽसिबुद्धिर्जरापुष्टितुष्टीधृतिःकांतिशांती ॥ सु विद्यासुलक्ष्मीर्गतिःकीर्तिमेधेत्वमेवाऽसिविश्वस्यबीजंपुराणम् ॥ २[illegible] [illegible]रूपैःकरोषीहकार्यंसुराणांचतेभ्योनमामोऽद्यशांत्यै ॥ क्षमायोगनिद्रा दयात्वंविवक्षास्थितासर्वभूतेषुशस्तैःस्वरूपैः ॥ २८ ॥ कृतंकार्यमा[illegible]याहेतोर्म[illegible]ांहतोऽसौमहारिर्मदांधोहयारिः ॥ दयातेसदासर्वदेवेषुदेविप्रसिद्धापु राणेषुवेदेषुगीता ॥ २९ ॥

मीप्यंचैवसायुज्यंचतुर्लक्षजपात्स्मृते ॥ इत्यनेनलक्षचतुष्टयात्मकमपिपुरश्चरणमभिहितम् ॥१९ [illegible]मेघांतक[illegible]२ ॥२३ ॥ महामायांमायाविशिष्टब्रह्मरूपिणींभुवनेश्वरीमित्यर्थः ॥ २४ ॥ तेतुभ्य मित्यर्थः ॥ सदानंदरूपेब्रह्मरूपेइत्यर्थः ॥ २५ ॥ आदिदेवोहिरण्यगर्भस्तदादयोयेदेवास्तत्स्वरूपे ॥ [illegible]गर्भःसमवर्तताग्रेइतिश्रुतेः ॥ २६ ॥ कांतिशांतीतिद्वंद्वः ॥ तथा[illegible]मधेइत्यत्रापि ॥ विश्वस्यबीजंमायाविशिष्टब्रह्मरूपमव्यक्तम् ॥ २७ ॥ तेभ्योरूपेभ्यइत्यर्थः ॥ शांत्यैकल्याणार्थमित्यर्थः ॥ तान्यैवरूपै[illegible]योगनिद्रे[illegible]त ॥२८॥ कृतंकार्यमिति [illegible] यस्मात्कारणात्त्वयाय त्कार्यंमादौकृतं किंतत्सुराणांमहारिःशत्रुर्हयारिर्महिषासुरस्त्वयाहतइति ॥ तस्मात्कारणात्सर्वदेवेषुतेदयासदाप्रसिद्धा ॥ सादयावेदे[illegible]र्थः ॥ २९ ॥ ॥छ॥ ॥छ॥

इयंयदात्वयाकृताऽत्रकिंचित्रं ॥ मातुःस्वभावएवाऽयंयत्पुत्रेषुदयाकर्तव्येत्याह किमत्राऽस्तीति ॥ यतस्त्वंसुराणांजननित्रीसहाय्... समग्रंसर्वंकार्यंकुरुष्व नपुनर्महिष वधःकृतइतितावन्मात्रेणसंतोषंकुर्वित्यर्थः ॥ ३० ॥ एतेषांस्तुतिभक्तिश्रद्धादिकंदृष्ट्वाऽहंकार्यंकरिष्यामीत्याशां... ज्ञानाऽभावादित्याह नवातेइति ॥ तेगुणा... मियत्तांतथातवस्वरूपं वनजानीमहेवयं येनस्तुतिंकर्तुंसमर्थाभवेम ॥ तर्हिकिमर्थंमयाऽनुग्रहःकर्तव्यइतिचेत्तत्राह कृपापात्रमित्येकेन ॥ ३१ ॥ नन्वत्रमहान्श्रमोभवतिततोनाऽहमेतत्कार्यंकरिष्यामीतिचेत्तत्राह विनाबाणपा तैरिति ॥ अनायासेनैवेच्छामात्रेणैवसकलजगत्सर्जनवद्रिपून्हंतुंत्वंशक्ताऽसमर्थाऽसि ॥ किमर्थं... संचलितुंमूर्त्यर्थमवताराधृताइतिचेल्लोकैरवतारचेष्टावर्णनंकर्तव्यंतेनचतस्यकल्याणंभवितव्यमिति लोकोपकारायैवाऽवतारलीलाइत्याह तथापीति ॥ ३२ ॥ नन्विदंवाक्यंयोजगत्कर्ता... विधाऽस्मीतिचेत्तत्राह इदंशाश्वतमिति ॥ मूढालोकाअपिइदंजगच्छाश्वतनैवजानं तिजननमरणादिपरिणामवत्त्वात् ॥ तथाचजगतःकार्यत्वमुत्पत्त्याश्रयत्वात्सिद्धं ... भवेत् ॥ वानिश्चयेन ॥ तच्चकारणंनकेवलआत्मा निर्विकारत्वात् ॥ नकेवलंजडम् ॥

किमत्राऽस्तिचित्रंयदंबासुतंस्वंमुदापालयेत्पोषयेत्सम्यगेव ॥ यतस्त्वं... ॥ तेन... सहायाकुरुष्वैकचित्तेनकार्यंसमग्रम् ॥ ३० ॥ नवातेगुणानामिय त्तास्वरूपंवयंदेविजानीमहेविश्ववंद्ये ॥ कृपापात्रमित्येवमत्वातथाऽस्मा... रक्षपा... सदापाहिपातुंसमर्थे ॥ ३१ ॥ विनाबाणपातैर्विनामुष्टिघातैर्विनाशूल खड्गैर्विनाशक्तिदंडैः ॥ रिपून्हंतुमेवाऽसिशक्ताविनोदात्तथाऽपीहलोकोपकारायलीला ॥ ३२ ॥ इदंशाश्वतंनैवजानंतिमूढानकार्यंविनाकारणंसंभवेद्वा ॥ वयंतर्कयामोऽनुमानंप्रमाणंत्वमेवाऽसिकर्ताऽस्यविश्वस्यचेति ॥ ३३ ॥ अजःसृष्टिकर्तामुकुंदोऽविताऽयंहरोनाशकृद्वैपुराणेप्रसिद्धः ॥ नकिंत्वत्प्रसूतास्त्रय स्तेयुगादौत्वमेवाऽसिसर्वस्यतेनैवमाता ॥ ३४ ॥ त्रिभिस्त्वंपुराराधितादेविदत्तात्वयाशक्तिरुग्राचतेभ्यःसमग्रा ॥ त्वयासंयुतास्तेप्रकुर्वंतिकामंजगत्पाल नोत्पत्तिसंहारमेव ॥ ३५ ॥ तेकिंनमंदमतयोयतयोविमूढास्त्वांयेनविश्वजननींसमुपाश्रयंति ॥ विद्यांपरांसकलकामफलप्रदांतांमुक्तिप्रदांविबुधवृंदसुवं दितांघ्रिम् ॥ ३६ ॥ येवैष्णवाःपाशुपताश्चसौरादं...स्तएवप्रतिभांतिनूनम् ॥ ध्यायंतिनत्वांकमलांचलज्जांकांतिंस्थितिंकीर्तिमथाऽपिपुष्टिम् ॥ ३७ ॥ हरिहरादिभिरप्यथसेवितात्वमिहदेववरैरसुरैस्तथा ॥ नविभजंतिनयेऽल्पधियोनराजननितेविधिनाखलुवंचिताः ॥ ३८ ॥

तस्यनानाविधनियतभोगवज्जगज्जनकत्वाऽसंभवात् ॥ अतोऽन्यथाऽनुप...रूपानुमानेनमायाविशिष्टचेतनब्रह्मरूपिणीत्वमेवजगत्कारणमितिवयंकल्पयामइत्यर्थः ॥३३॥ नन्वहंजगत्कर्त्रीचेत्क थंब्रह्मादयःसृष्ट्यादिकर्तारइतिप्रसिद्धमितिचेत्तत्राह अजःसृष्टिकर्तेति ॥ अविता...सत्यंतेजगत्कर्तारः परंतुतेदेहवत्त्वादुत्पत्तिमंतएव ॥ तथाचतेषामपिकार्यत्वात्तत्रापिकारणापेक्षायांत्वमेवसर्व कारणंपर्यवस्यसीतिभावः ॥ तथाचश्रुतिर्मैत्रायणीयानाम् ॥ तमोवाइदमेकमेवास...परेस्यात्तत्परेणेरितंविषमत्वंप्रयातियदेतद्रजइत्यारभ्य ब्रह्मादीनांमायाविशिष्टब्रह्मणएवोत्पत्तिःप्रतिपादितेति ॥ ३४ ॥ तदेवस्पष्टयति त्रिभिस्त्वमिति ॥ ३५ ॥ इत्थंयात्वंसर्वेश्वरीत्वांयेनभजंति...मूढाएवेत्याह तेकिंनेति ॥ यतयस्तेपीत्यर्थः ॥ तथायेवैष्णवाद्यास्तेऽपिदंभादांभिकाएवमूढाएवेत्याह येवैष्ण वाइति ॥ ३६ ॥ ३७ ॥ ननुकिमितितेमूढाइतिचेत्तेवैष्णवाद्यायान्विष्ण्वादिदेवान्भजं...देवाअपियांदेवतांपराशक्तिंभजंतितामभजंतस्तेकथंनमूढाइत्याह ॥ हरिहरादिभिरपीति ॥ नहिराजसे वकसेवनकर्ताराजानंभजतिमुख्यत्वेन ॥ नतेकेवलंमूढा अपितुविधिनावंचिताअपीत्याह वि...नेति ॥ ३८ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

कथंहरिहरादयोभजंतीतितत्स्वरूपमाह जलधिजेति ॥ जलधिजारमा ॥ जतुलाक्षा स्पष्टमन्यत् ॥ ३९ ॥ एतादृशाब्रह्मादयोमहांतोऽपियदात्वांभजंतितदापरस्यकाकथेत्याह किमपरस्यनरस्ये

जलधिजापदपंकजरंजनंजतुरसेनकरोतिहरिःस्वयम् ॥ त्रिनयनो[illegible]धराधरजांघ्रिपंकजपरागनिषेवणतत्परः ॥३९॥ किमपरस्यनरस्यकथानकैस्तवपदाब्ज युगंनभजंतिके ॥ विगतरागगृहाश्चदयांक्षमांकृतधियोमुनयो[illegible]जंतिते ॥ ४० ॥ देवित्वदंघ्रिभजनेनजनारतायेसंसारकूपपतिताःपतिताःकिलामी ॥ तेकुष्ठगुल्मशिरआधियुताभवंतिदारिद्र्यदैन्यसहितारहिता[illegible]खौघैः ॥ ४१ ॥ येकाष्ठभारवहनेयवसावहारेकार्येभवंतिनिपुणाधनदारहीनाः ॥ जानीम हेऽल्पमतिभिर्भवदंघ्रिसेवापूर्वेभवेजननितैर्नकृताकदा[illegible] ॥ ४२ ॥ व्यासउवाच ॥ एवंस्तुतासुरैःसर्वैरंबिकाकरुणान्विता ॥ प्रादुर्बभूवतरसारूपयौव नसंयुता ॥ ४३ ॥ दिव्यांबरधरादेवीदिव्यभूषणभू[illegible]ता ॥ दिव्यमाल्यसमायुक्तादिव्यचंदनचर्चिता ॥४४॥ जगन्मोहनलावण्यासर्वलक्षणलक्षिता॥ अद्वितीयस्वरूपासादेवानांदर्शनंगता ॥ ४५ ॥ [illegible]न्हव्यांस्नातुकामासानिर्गतागिरिगह्वरात् ॥ दिव्यरूपधरादेवीविश्वमोहनमोहिनी ॥ ४६ ॥ देवा न्स्तुतिपरानाहमेघगंभीरयागिरा ॥ प्रेमपूर्वंस्मितंकृत्वाकोकिलामंजुवादिनी ॥ ४७ ॥ देव्युवाच ॥ भोभोःसुरवराःकाऽत्रभवद्भिःस्तूयतेभृशम् ॥ किम र्थंब्रूतवःकार्यंचिंताविष्टाःकुतःपुनः ॥ ४८ ॥ व्यासउवाच ॥ तच्छ्रुत्वाभाषितंतस्[illegible]मोहितारूपसंपदा ॥ प्रेमपूर्वंत्दृदुत्साहास्तामूचुःसुरसत्तमाः ॥ ४९ ॥ देवाऊचुः ॥ देविस्तुमस्त्वांविश्वेशिप्रणताःस्मकृपार्णवे ॥ पाहिनःसर्वदुःखेभ्योसंविग्नान्दैत्यतापितान् ॥ ५० ॥ पुरात्वयामहादेविनिहत्यासुरकंटकम् ॥ महिषंनोवरोदत्तःस्मर्तव्याऽहंसदाऽऽपदि ॥ ५१ ॥ स्मरणाद्दैत्यजांपीडांनाशयिष्याम्यसंशयम् ॥ तेनत्वंसंस्मृतादेविनूनमस्माभिरित्यपि ॥ ५२ ॥ अ घशुंभनिशुंभौद्वावसुरौघोरदर्शनौ ॥ उत्पन्नौविघ्नकर्तारावहन्यौपुरुषै[illegible] ५३ ॥ रक्तबीजश्चबलवांश्चंडमुंडौतथाऽसुरौ ॥ एतैरन्यैश्चदेवानांत्दृतंराज्यं महाबलैः ॥ ५४ ॥ गतिरन्यानचास्माकंत्वमेवाऽसिमहाबले ॥ [illegible]वंदुःखितानांसुमध्यमे ॥ ५५ ॥ देवास्त्वदंघ्रिभजनेनिरताःसदैवतेदा नवैरतिबलैर्विपदंसुनीताः ॥ तान्देविदुःखरहितान्कुरुभक्तियुक्तान्[illegible]णंभवदुःखितानाम् ॥ ५६ ॥ सकलभुवनरक्षादेविकार्यात्वयाऽद्य स्वकृतमितिविदित्वाविश्वमेतद्युगादौ ॥ जननिजगतिपीडांदानवै[illegible]मदसमेतास्तेप्रकुर्वंतिमातः ॥ ५७ ॥ ॥इतिश्रीदेवीभागवतेमहापु राणेपंचमस्कंधेद्वाविंशोऽध्यायः ॥ २२ ॥

ति ॥ येत्यक्तैषणाज्ञानिनस्तेऽपित्वदंशभूतांदयांक्षमांचभजंतीत्यर्थः ॥ ४० ॥ येत्वांनभजंतितेषांगति[illegible]ह ॥ देवित्वदंघ्रीति ॥ भजनेनरताइत्यन्वयः ॥ ४१ ॥ यवसंतृणंतस्या ऽवहारोभक्षणम् ॥ स्पष्टमन्यत् ॥४२॥४३॥४४॥४५॥४६॥४७॥४८॥४९॥५०॥५१॥५२॥५३॥५४॥५५॥५६॥५७॥ इतिश्री[illegible]देवीभागवततिलकेपंचमस्कंधे[illegible]शोऽध्यायः ॥ २२ ॥ ॥

॥ अथोऽधिकैश्चषट्षष्टिश्लोकैरथसुरैःस्तुता ॥ कौशिकीतिगिरौतत्रप्रादुर्भूतेतिचोच्यते ॥ १ ॥ देववाक्यश्रवणोत्तरंपार्वतीयत्कृ... रतदाह एवंस्तुतेति ॥ १ ॥ नैशिकीति ॥ कोशान्निर्गताकौशिकी ॥ तदुक्तम् शरीरकोशाद्यत्तस्याःपार्वत्यानिःसृतांबिका ॥ कौशिकीतिसमस्तेषुततोलोकेषुगीयतइति ॥ ...साधुत्वम् ॥ तदुक्तंवैकृतिकरहस्ये ॥ गौरीदेहसमुद्भूतायासत्त्वैकगुणाश्रया ॥ साक्षात्सरस्वतीप्रोक्ताशुंभासुरनिबर्हिणी ॥ दधौचाष्टभुजाबाणमुसलेशूलचक्रभृत् ॥ शंखंघंटां... सुकंवसुधाधिप ॥ एषासंपूजिताभक्त्यासर्वज्ञत्वंप्रयच्छतीति ॥ २ ॥ निःसृतायामिति ॥

॥ व्यासउवाच ॥ एवंस्तुतातदादेवीदेवैःशत्रुतापितैः ॥ स्व... र्भूतंचकारह ॥ १ ॥ पार्वत्यास्तुशरीराद्वैनिःसृताचांबिकायदा ॥ कौशिकीतिसमस्तेषुततोलोकेषुपठ्यते ॥ २ ॥ निःसृतायांतुतस्यां... यात् ॥ कृष्णरूपाऽथसंजाताकालिकासाप्रकीर्तिता ॥ ३ ॥ मषीवर्णामहाघोरादैत्यानांभयवर्धिनी ॥ कालरात्रीतिसाप्रोक्तासर्वका... ॥ अंबिकायाःपररूपंविरराजमनोहरम् ॥ सर्वभूषणसंयुक्तंलावण्यगुणसंयुतम् ॥ ५ ॥ ततोंबिकातदादेवानित्युवाचहसस्मिता ॥ तिष्ठंतुनि... हरिष्यामिरिपूनिह ॥ ६॥ कार्यंवःसर्वथाकार्यंविहरिष्याम्यहंरणे ॥ निशुंभादीन्वधिष्यामियुष्माकंसुखहेतवे ॥ ७ ॥ इत्युक्त्वासातदातेवीसिंहारूढामदोत्कटा ॥ कालिकांपार्श्वतःकृत्वाजगामनगरेरिपोः ॥ ८ ॥ सागत्वोपवनेतस्थावंबिकाकालिकान्विता ॥ जगावथकलंतत्रजगन्मोहनमोहनम् ॥९॥ श्रुत्वातन्मधुरंगानंमोहमीयुःखगामृगाः ॥मुदंचपरमांप्रापुरमरागगनेस्थिताः ॥ १० ॥ तस्मिन्नवसरेतत्रदानवौशुंभसेवकौ ॥ चंडमुंडाभिधौघोरौरममाणौयदृच्छया ॥ ११ ॥ आगतौददृशातेतुतांतदादिव्यरूपिणीम् ॥ अंबिकांगानसंयुक्तांकालिकांपुरतःस्थिताम् ॥ १२ ॥ दृष्ट्वातांदिव्यरूपांचदानवौविस्मयान्वितौ ॥ जग्मतुस्तरसापार्श्वेशुंभस्यनृपसत्तम ॥१३॥ तौगत्वातौसमासीनंदैत्यानामधिपंगृहे ॥ ऊचतुर्मधुरांवाणींप्रणम्यशि... सान्नृपम् ॥१४॥ राजन्हिमालयात्कामंकामिनीकाममोहिनी ॥ संप्राप्तासिंहमारूढासर्वलक्षणसंयुता ॥ १५ ॥ नेदृशीदेवलोकेऽस्तिनगंधर्वपुरेतथा ॥ नदृ...नश्रुताक्वाऽपिपृथिव्यांप्रमदोत्तमा ॥ १६ ॥ गानंचतादृशंराजन्करोतिजनरंजनम् ॥ मृगास्तिष्ठंतितत्पार्श्वेमधुरस्वरमोहिताः ॥ १७ ॥ ज्ञायतांकस्यपुत्रीयं... र्थमिहचागता ॥ गृह्यतांराजशार्दूलतवयोग्याऽस्तिकामिनी ॥१८॥ ज्ञात्वानयगृहेभार्यांकुरुकल्याणलोचनाम् ॥ निश्चितंनास्तिसंसारेनारीत्वेवंविधाक्वचित् ॥१९॥देवानांसर्वरत्नानिगृहीतानित्वयानृप॥कस्मान्नेमांवरारोहांप्रगृह्णासिनृपोत्तम॥२०॥

पार्वत्यास्तनुव्यत्ययाच्छरीरपरिणामात् तस्यांकौशिक्यांनिःसृतायांनिर्गतायांसत्यां...सासैवकौशिकीअथानंतरंकृष्णरूपासंजाता तदासाकृष्णवर्णत्वात्कालिकेतिप्रकीर्तितेत्यर्थः ॥३॥ तस्याध्यानमाह मषीवर्णेति ॥ इयमेवकालरात्रिरित्यर्थः ॥ ४ ॥ अंबिकायाइति यस्याःशरीरात्का...र्व्युत्पन्नातस्याःपार्वत्याइत्यर्थः ॥ ५ ॥ ततोंबिकापार्वतीत्यर्थः ॥ ६ ॥७ ॥ कालिकांस्वशरीरान्निर्गतांकौशिकीमित्यर्थः ॥ ८ ॥ जगन्मोहनस्यकामस्यापिमोहनंमोहकारकम् कलंमधुरंजगौ ॥९॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ संसारेनिश्चितंनास्तीत्यन्वयः ॥ १९ ॥ २०

इंद्रस्यैरावतःश्रीमान्पारिजाततरुस्तथा ॥ गृहीतोऽश्वःसप्तमुखस्त्व[illegible]नृपबलात्किल ॥ २१ ॥ विमानंवैधसंदिव्यंमरालध्वजसंयुतम् ॥ त्वयाऽऽत्तंरत्नभू तंतद्बलेननृपचाद्भुतम् ॥ २२ ॥ कुबेरस्यनिधिःपद्मस्त्वयाराज[illegible]समाहृतः ॥ छत्रंजलपतेःशुभ्रंगृहीतंतत्त्वयाबलात् ॥ २३ ॥ पाशश्चाऽपिनिशुंभेनभ्रा त्रातवनृपोत्तम ॥ गृहीतोस्तिहठात्कामंवरुणस्यजितस्यच [illegible]२४ ॥ अम्लानपंकजांतुभ्यंमालांजलनिधिर्ददौ ॥ भयात्तवमहाराजरत्नानिविविधानिच ॥ २५ ॥ मृत्योःशक्तिर्यमस्याऽपिदंडःपरमदारुणः ॥ [illegible]जित्वाहृतःकामंकिमन्यद्वर्ण्यतेनृप ॥ २६॥ कामधेनुर्गृहीताऽद्यवर्ततेसागरोद्भवा ॥ मेनका द्यावशेराजंस्तवतिष्ठंतिचाऽप्सराः ॥ २७ ॥ एवंसर्वा[illegible]रत्नानित्वयाऽऽत्तानिबलादपि ॥ कस्मान्नगृह्यतेकांतारत्नमेषावरांगना ॥ २८ ॥ सर्वाणितेगृह स्थानिरत्नानिविशदान्यथ ॥ अनयासंभविष्यंतिर[illegible]भूतानिभूपते ॥ २९ ॥ त्रिषुलोकेषुदैत्येंद्रनेदृशीवर्ततेप्रिया ॥ तस्मात्तामानयाऽऽशुत्वंकुरुभार्यांम नोहराम् ॥ ३० ॥ व्यासउवाच ॥ इतिश्रुत्वा[illegible]वाक्यंमधुरंमधुराक्षरम् ॥ प्रसन्नवदनःप्राहसुग्रीवंसन्निधौस्थितम् ॥ ३१ ॥ गच्छसुग्रीवदूतत्वंकुरु कार्यविचक्षण ॥ वक्तव्यंचतथातत्रयथाऽभ्येतिकृशोदरी ॥ ३२ ॥ उपायौद्वौप्रयोक्तव्यौकांतासुसुविचक्षणैः ॥ सामदानावितिप्राहुःशृंगाररसकोविदाः॥ ॥ ३३ ॥ भेदेप्रयुज्यमानेऽपिरसाऽऽभासस्तुजायते ॥ निग्रहेरसभंगःस्यात्तस्मात्तौदूषितौबुधैः ॥३४॥ सामदानसुखैर्वाक्यैःश्लक्ष्णैर्नर्मयुतैस्तथा ॥ का नयातिवशेदूतकामिनीकामपीडिता ॥ ३५ ॥ व्यासउवाच ॥ सुग्रीवस्तुवचःश्रुत्वाशुंभोक्तंसुप्रियंपटु ॥ जगामतरसातत्रयत्राऽऽस्तेजगदंबिका ॥३६॥ सोऽपश्यत्सुमुखींकांतांसिंहस्योपरिसंस्थिताम् ॥ प्रणम्यमधुरंवाक्यम[illegible]दंबिकाम् ॥ ३७ ॥ दूतउवाच ॥ वरोरुत्रिदशारातिःशुंभःसर्वांगसुंदरः ॥ त्रैलोक्याऽधिपतिःशूरःसर्वजिद्राजतेनृपः ॥ ३८ ॥ तेनाऽहंप्रेषि[illegible]शंमहात्मना ॥ त्वद्रूपश्रवणासक्तचित्तेनातिविदूयता ॥ ३९ ॥ वच नंतस्यतन्वंगिशृणुप्रेमपुरस्सरम् ॥ प्रणिपत्ययथाप्राहदैत्या[illegible] ॥ देवामयाजिताःसर्वेत्रैलोक्याधिपतिस्त्वऽहम् ॥ यज्ञभागानऽहं कांतेगृह्णामीहस्थितःसदा ॥ ४१ ॥ हृतसाराकृतानूनंद्यौर्मयारत्न[illegible]तानिदेवानांतानिचाऽऽहृतवानहम् ॥ ४२ ॥ भोक्ताऽहंसर्वरत्नानां त्रिषुलोकेषुभामिनि ॥ वशाऽनुगाःसुराःसर्वेममदैत्याश्चमानवाः ॥ ४३[illegible]कर्णमागत्यप्रविश्यहृदयांतरम् ॥ त्वदधीनःकृतःकामंकिंकरोस्मिक रोमिकिम् ॥ ४४ ॥ त्वमाज्ञापयरंभोरुतत्करोमिवशाऽनुगः ॥ दासोऽहंतववचा[illegible]प्राणतः ॥ ४५ ॥

॥ ३९ ॥ भजमांत्वंमरालाक्षितवाधीनंस्मराऽऽकुलम् ॥ त्रैलोक्यस्वामिनीभूत्वाभुंक्ष्व... नुत्तमान् ॥ ४६ ॥ तवचाऽऽज्ञाकरःकांतेभवामिमरणावधि ॥ अवध्योऽस्मिवरारोहेसदेवासुरमानुषैः ॥ ४७ ॥ सदासौभाग्यसंयुक्ताभवि... ॥ यत्रतेरमतेचित्तंतत्रक्रीडस्वसुंदरि ॥ ४८ ॥ ॥ इतितस्यवचश्श्रुत्वाविमृश्यमदमंथरे ॥ वक्तव्यंयद्भवेत्प्रेम्णातद्ब्रूहिमधुरंवचः ॥ ... पांगितद्ब्रवीम्यहमाशुवै ॥ व्यासउवाच ॥ तद्दूतवचनंश्रुत्वास्मितंकृत्वासुपेशलम् ॥ ५० ॥ तंप्राहमधुरांवाचंदेवीदेवार्थसाधिका ॥ ...ङ्ग्युवाः ॥ तेनाजानाम्यहंनिशुंभंचशुंभंचाऽतिबलंनृपम् ॥ ५१ ॥ जेतारंसर्वदेवानांहंतारंचैवविद्विषाम् ॥ राशिंसर्वगुणानांचभोक्तारंसर्वसंपदाम् ॥ ५२ ॥ ...धाऽतिशूरंचसुंदरंमन्मथाकृतिम् ॥ द्वात्रिंशल्लक्षणैर्युक्तमवध्यंसुरमानुषैः ॥ ५३ ॥ ज्ञात्वासमागतास्म्यत्रद्रष्टुकामामहाऽसुरम् ॥ रत्नंकनकमायातिस्वयशोभाधिकवृद्धये ॥ ५४ ॥ तत्राऽहंस्वपतिंद्रष्टुंदूरादेवाऽऽगताऽस्मिवै ॥ दृष्टमयासुराःसर्वेमानवाभुविमानदाः ॥ ५५ ॥ गंधर्वाराक्षसाश्चाऽन्येयेचाऽतिप्रियदर्शनाः ॥ सर्वेशुंभभयाद्भीतावेपमानाविचेतसः ॥ ५६ ॥ श्रुत्वाशुंभगुणानत्रप्राप्तास्म्यद्यदिदृक्षया ॥ गच्छदूतमहाभागब्रूहिशुंभंमहाबलम् ॥ ५७ ॥ निर्जनेश्लक्ष्णयावाचावचनंवचनान्मम ॥ त्वांज्ञात्वाबलिनांश्रेष्ठंसुंदराणांचसुंदरम् ॥ ५८ ॥ दातारंगुणिनंशूरंसर्वविद्याविशारदम् ॥ जेतारंसर्वदेवानांदक्षंचोग्रंकुलोत्तरम् ॥ ५९ ॥ भोक्तारंसर्वरत्नानांस्वाधीनंस्वबलोन्नतम् ॥ पतिकामास्म्यहंसत्यंतवयोग्यानराधिप ॥ ६० ॥ स्वेच्छयानगरेतेऽत्रसमायातामहामते ॥ ममाऽस्तिकारणंकिंचिद्विवाहेराक्षसोत्तम ॥ ६१ ॥ बालभावाद्व्रतंकिंचित्कृतंराजन्मयापुरा ॥ क्रीडंत्याचवयस्याभिःसहैकांतेयदृच्छया ॥ ६२ ॥ स्वदेहबलदर्पेणसखीनांपुरतोरहः ॥ मत्समानबलःशूरोरणेमांजेष्यतिस्फुटम् ॥ ६३ ॥ तंवरिष्याम्यहंकामंज्ञात्वातत्स्वबलाऽबलम् ॥ जहसुर्वचनंश्रुत्वासख्योविस्मितमानसाः ॥ ६४ ॥ किमेतयाकृतंक्रूरंव्रतमद्भुतमाशुवै ॥ तस्मात्त्वमपिराजेंद्रज्ञात्वामेहीदृशंबलम् ॥ ६५ ॥ जित्वामांस्वबलेनाऽत्रवांछितंकुरुचात्मनः ॥ त्वंवातवाऽनुजोभ्रातासमेत्यसमरांगणे ॥ ॥ ६६ ॥ जित्वामांसमरेणाऽत्रविवाहंकुरुसुंदर ॥ ॥ इतिश्रीदेवीभागवतेपंचमस्कंधेत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ ३९ ॥

त्यर्थः ॥ एतद्व्याख्याऽपितत्रैवस्पष्टा ॥ महाभारतेचप्रसिद्धानि ॥ ५३ ॥ स्वस्यशोभायाअधिकवृद्ध्यर्थम् ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ॥ ६५ ॥ ६६ ॥ ॥ इतिश्रीदेवीभागवततिलकेपंचमस्कंधेत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

